# अनुक्रमणी

# विश्व-संस्कृतम्

विश्व-ज्योतिः सदा शुभ्रं संस्कृतं विश्वम् आचरत् ।
साहित्यस्य सतः सिद्ध्या उदितं विश्व-संस्कृतम् ॥

वर्षम् ४ } फाल्गुनः २०२३ ( फरवरी १९६७ ) { अङ्कः २

## शाश्वती वाक्[†]

यं देवासोऽवथ वाजसातौ[1] यं शूरसाता[2] मरुतो हिते धने[3] ।
प्रातर्यावाणं रथम् इन्द्र[4] सानसिम् अरिष्यन्तम् आरुहेमा स्वस्तये ॥

स्वस्ति नः पथ्यासु[5] धन्वसु[6] स्वस्त्यप्सु वृजने[7] स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥

( ऋ० १०,६३,७; ८ )

---

† अत्रोदात्त-स्वरिताव् एव स्वराव् अङ्कितौ । अधो-रेखया पूर्व ऊर्ध्व-रेखया चोत्तरः । अनङ्कितश् चानुदात्तो द्रष्टव्यः ।

❊ एतच् चिह्नं सम्पादकोपज्ञम् अर्थाऽभ्यूहम् आह ।

---

१. बलप्राप्ति-निमित्तम् । २. शूर-प्राप्ति-निमित्तम् । ३. धन-निमित्तम् । ४. *इन्द्र-सान्निध्यकरम् । ५. मार्गेषु । ६. मरु-भूमिषु । ७. *ग्रामे ।

# वन्दना

विद्यानिधिः*

करुणावरुणालय देव ! पितः !
सवितः परितः शिवमातनुयाः ।
सरलां विरलां विमलां सकलां
सुषमां सुतमां सततं सनुयाः ॥ १ ॥

निजदेशबलं प्रथतां विपुलं
प्रियमीप्सितमाप्तुमलं सफलम् ।
भगवन् ! मघवन् ! अघवन्न भवेद्
इति नम्रवचो मृदु नः शृणुयाः ॥ २ ॥

स्फुरित दुरितं त्वरितं शमयन्
रमयन् परमां चरमां च रमाम् ।
महित स्वहितं सुहितं नमयन्
बहुशास्त्वममुष्य यशश्चिनुयाः ॥ ३ ॥

हृदयं सदयं विनयः सनयः
प्रणयः कृतपुण्यगुणाभ्युदयः ।
वदनं सुमहःसदनं भवतान्
मदनं कदनीयमदं क्षिणुयाः ॥ ४ ॥

अयि पालक ! चालक ! बालकजाः
प्रसमीक्ष्य विशिष्य तु शिष्यगणे ।
क्षमतां क्षमतां दधदाशु भवान्
इह ता अहितास्त्रुटयो ननु याः ॥ ५ ॥

---

*व्याकरणाचार्यः, प्रधानाचार्यः, गुरुकुल भैंसवाल (रोहतक) ।

# पाणिनीयाष्टके काश्चिद् व्यवहार-दिशः

चारुदेवशास्त्री*

साध्वनुशासनम् इदं शास्त्रं पाणिनीयं नाम । साधुत्वं च शिष्ट-प्रयुक्तत्वम् । तत्र भवन्तः शिष्टा यच्छब्द-रूपम् आदायाऽभिधेयम् अभिदधति तत् साधु, इतरद् असाधु । शिष्ट-व्यवहार एवाऽन्वाचिख्यासितः शास्त्रेण, तेन व्याकरणम् अन्वाख्यान-स्मृतिर् इति संविज्ञायते । सर्वथा शिष्ट-व्यवहार एव प्रधानम्, उपसर्जनं व्याकरणम्, तदर्थं तत्प्रवृत्तेः । इमम् एव चाऽर्थं भगवान् सूत्र-कारः कण्ठ-रवेणाऽभ्युपागाद् यत् 'पृषोदरादीनि यथोपदिष्टम्'[1] इति न्यासम् आस्थात् । एतम् एवाऽर्थं भगवान् भाष्यकारोऽप्य् उरसि कुरुते यत् तत्तदिष्ट-रूप-प्रसिद्धये तत्र तत्र सूत्र-विषय-सङ्कोच-व्याकोचौ संश्रयते । क्वचिद् 'अनभि-धानाद्' इत्युक्त्याऽनिष्टम् अपहस्तयते । क्वचिद् 'इष्यत एतद्रूपम्' इति सङ्गरेण यद् इष्टं तत् संकलयते । अयं चाऽर्थो निर्भिन्नाऽर्थतरकम् एवम् उच्यते—शास्त्रे तावत् तिङ्-कृत्-तद्धित-समासैर् अभिधानम् उक्तम् अर्थानाम् । तद्यथा—'श्राद्धे शरदः'[2] इति शास्त्रं शरच् शब्दाच् श्राद्धेऽभिधेये ठञं विधत्ते । तेन शारदिक-शब्दो निष्पद्यते । श्राद्ध-शब्देन चोभयम् उच्यते । श्रद्धावत् कर्म श्रद्धावान् पुरुषश् च । इह तु श्रद्धावान् पुरुषो न गृह्यते । तत् कस्मात् ? अनभिधानात् । किम् इदम् अनभिधानं नाम । शिष्टाऽप्रयुक्तत्वम् । नहि शिष्टाः श्राद्धे पुरुषे विषये शारदिक-शब्दं प्रयुञ्जते । महाभागास् ते सामान्येन विहितम् अपि ठञं तत्राऽर्थे नेच्छन्ति । 'तेन दीव्यति खनति जयति जितम्'[3] । अत्र जितम् इत्यर्थे सामान्येन ठग् विहितः, देवदत्तेन जितम् इत्यत्र न भवति, अनभिधानात् । एवम् अङ्गुल्या खनतीत्य् अत्राऽपि न । अनभिधानाद् एव । 'तस्येदम्'[4] इति सामान्येनाऽणादयो घादयश् च विधीयन्ते । अण्य् उपगोर् इदम् औपगवम् । परं देवदत्तस्याऽनन्तरम् इत्यत्र न भवत्य् अण्, अनभिधानात् । 'समानकर्तृकेषु तुमुन्'[5] इत्य् अनेनेच्छार्थेषु धातुषूपपदेषु धातुमात्रात् तुमुन् विहितः । इह कस्मान् न भवति— 'इच्छन् करोति' । अनभिधानात् । सतत-शब्दाद् भाव-कर्मणोः ष्यञ् भवति, सन्ततात् तु नेति, कस्मात् । अनभिधानाद् एव ।

---

*विद्यावाचस्पतिः, एम. ए., एम. ओ एल्; ३/५४ रूपनगर देहली ।

---

१. पा० ६,३,१०९ । २. तत्रैव ४,३,१२ । ३. तत्रैव ४,४,२ । ४. तत्रैव ४, ३,१२० । ५. तत्रैव ३, ३,१५८ ।

'प्राजिता' इत्य् अस्य साधुत्वम् उपपादयन् भगवान् भाष्यकारः 'प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञः, इष्यत एतद् रूपम्' इति सूतोक्तिम् उदाहरति, शास्त्रेण साक्षाद् अविहितम् अननुज्ञातम् अपि रूपम् इष्टम् इति चाऽनुजानाति। तद् इदं सर्वं व्यवहारः प्रधानम् इतीदम्परम्।

व्यवहार-पारदृश्वा व्यवहारे च परम समादृतः सूत्रकारः स्वेन कृताम् अनुशिष्टिम् अपि नाऽऽद्रियते। 'तदर्हम्'[1] इति सूत्रे कृद्योगलक्षणां षष्ठीम् उपेक्ष्य व्यवहाराऽनुगां तदिति द्वितीयां प्रयुङ्क्ते, न च चिन्तयते शास्त्रैक-पक्षपातिनो माम् अधिक्षेप्स्यन्त्य् अन्यद् अयम् उपदिशत्य् अन्यच् चाऽऽचरतीति। परं परं ह्य् अस्य व्यवहारे पारवश्यम् तच्छीलन-वासना-वासिताऽन्तःकरणोऽयं कथङ्कारं तम् अतीयात्। द्वितीया-व्यवहारश् चाऽर्ह-शब्द-योगे तथा प्रत्यष्ठाद् यथा वश्य-वाचां प्राचां मुनीनां कृतिषु रामायणाऽऽदिषु यत्र तत्राऽयत्नतः कृतो लभ्यते। इमांस् तु प्रदेशान् स्थूलोच्चयेन निर्दिशामः—'न परित्यागमर्हेयं मत्-सकाशाद् अरिन्दम' इति श्रीरामायणे[2]। 'पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः' इति भारत आदि-पर्वणि[3]। 'तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः' इति च तत्रैवोद्योगपर्वणि[4]। 'अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम्' इति च तत्रैव सभापर्वणि[5]। 'नैवार्हः पैतृकं रिक्थम्' इति मानवे धर्मशास्त्रे च[6]।

यत् तु हरदत्तमिश्राः पदमञ्जर्याम्—'तदर्हम्। अर्ह-शब्दः पचाद्यजन्तस् तद्योगे कर्मणि षष्ठ्या भवितव्यम्। निपातनाद् द्वितीया। अपर आह—विग्रह-वाक्याऽभिप्रायम् एतत्। यदा राजानम् अर्हतीत्य् एवं तिङन्तेन विगृह्यते तदा द्वितीया-समर्थम् इति। सूत्रे तु तदर्हम् इति कर्मोपपदाद् अच् प्रत्ययः कृत' इति निराहुः, तन् मन्दम्। निपातनेनाऽर्थवता भवितव्यम्। कोऽसाव् अर्थो योऽन्यथा-ऽसिद्धो निपातनेन सिषाधयिष्यते। यदिह मताऽन्तरम् उपन्यस्तं तद् अपि न क्षोद-क्षमम्। तथा हि नैषा सूत्रकारस्य शैली लक्ष्यते यत् प्रत्यय-विधौ समर्थ-विभक्तिं व्यस्तम् अनुच्चार्योपपद-समासेन तां निर्दिशेत्। वस्तुतो लक्षणैकचक्षुष्का विवरीतारोऽत्र विभ्रान्ताः।

उपसर्ग-विषये व्यवहारं परिच्छिन्दन् सूत्रकारो महद् उपकरोति लोकस्य। अद्यत्वे प्रायेण वहेः केवलस्य योऽर्थो धारण-लक्षणः स एवाऽऽङ्-

---

१. पा० ५, १, ११७। २. रा. १, ५३, १२।

पूर्वस्येति प्रतिपन्नाः प्रतिपत्तारः प्रतिपादयितारश् च व्यवहारम् आकुलयन्ति। 'तद्धरति वहत्यावहति भाराद्वंशादिभ्यः'[1] इति सूत्रे वहतिना सहचरितम् आवहतिं प्रयुञ्जान आचार्यः परिचाययति पृथगर्थाव् एताव् इति नैकत्राऽर्थे प्रयोगम् अर्हत इति। वहत्युत्क्षिप्य धारयति, आवहत्य् उत्पादयतीत्यर्थ इति हि तयोर् विवेकः।

व्याङ्पूर्वो हरतिर् यथा व्यक्तवाचाम् उच्चारणम् आह तथाऽव्यक्तवाचाम् अपीत्यत्र 'व्याहरति मृगः'[2] इति सूत्रं लिङ्गम्। प्रदोषे व्याहरन् रुवन् मृगः प्रादोषिक इति चोच्यते। 'परभृतकलव्याहारेषु त्वमात्तरतिर् मधुम्'[3] इत्यत्र मालविकायां कालिदासः सूत्रकारम् अनुसरतीत्य् अवचनीयो भवति। आभिधानिकास् तु 'व्याहार उक्तिर् लपितं भाषणं वचनं वच' इति व्याहारम् उक्त्यादिभिः समानार्थत्वेन पठन्तो व्यक्तवाग्-विषयः स इत्य् अतिशयं विद्योतयन्ति। यस्माद् उक्त्यादयोऽविकला व्यक्तायां वाचि वर्तमानात् तत्तद्धातोर् व्युत्पन्नाः।

अधिक-शब्द-योगे पञ्चमी-सप्तम्याव् उभे अपि व्यवहारानुपातिन्याव् इति भगवत्पाणिनेर् व्यवहाराद् एव विज्ञायते। 'यस्मादधिकं यस्य चेश्वरवचनम्'[4] इति सूत्रेऽधिक-योगे पञ्चमीं व्यवहरति 'तदस्मिन्नधिकमिति दशान्ताड्डः'[5] इति सूत्रे च सप्तमीम्।

एवम् आधाराधेययोः प्रमाणाऽनतिरेके वर्तमानः संभवतिः सकर्मकोऽकर्मकश् चेत्युभयथा सूत्रकारस्य व्यवहारः प्रमाणयति। तद्यथा—'संभूते'[6] इत्यत्र सप्तमी-समर्थात् संभूतेऽर्थे यथा-विहितम् अणादयो घादयश् च भवन्तीत्य् आह। मथुरायां संभवति माथुरः। राष्ट्रे संभवति राष्ट्रियः 'संभवत्यवहरति पचति'[7] इति सूत्रे च द्वितीया-समर्थात् संभवतीत्यर्थे ठग् भवतीति विधत्ते। प्रस्थं संभवति स्थाली प्रास्थिकी।

इहाष्टके स्वर-सूत्रेष्व् अविवक्षितम् अपि प्रासङ्गिकं यद् व्यवहारनिरूपणम् अभूत् तेनाऽधमर्णा वयं सूत्रकारस्य।

पद-शब्दस्याऽपदेशे व्याजेऽर्थे प्रयोगः प्राचारीद् इति 'पदेऽपदेशे'[8] इति सूत्रतोऽवसीयते। अपदेश-वाचिनि पद-शब्द उत्तरपदे पूर्व-पदं प्रकृति-स्वरं

१. पा० ५१, ५०। २. तत्रैव, ४,३,५१। ३. मालविकाग्निमित्रम्, ५,१। ४. पा० २,३,९। ५. तत्रैव, ५,२,४५। ६. तत्रैव, ४,३,४१। ७. तत्रैव, ५,१,५२। ८. तत्रैव, ६,२,७।

भवति तत्पुरुषे समास इति सूत्रार्थः । 'मूत्रपदेन गतः', 'उच्चारपदेन गत' इति चोदाहरणे । प्राक्तने वाङ्मयेऽस्य शब्दस्याऽस्मिन्न् अर्थे प्रयोगो नोपलभ्यत इति महती चित्रीया । उपाध्यायानां शिष्यान् उद्दिश्यैवञ्जातीयकः प्रयोगोऽभूद् इत्यनुमा जायमाना न वार्यते ।

शारद-शब्दः प्रत्यग्र-वचन इत्यत्र 'शारदेऽनार्तवे'[1] इति सूत्रं मानम् । अनार्तव-वाचिनि शारद-शब्द उत्तरपदे तत्-पुरुषे समासे पूर्व-पदं प्रकृति-स्वरं भवतीति सूत्राऽर्थः । शारद-शब्दोऽत्र प्रत्यग्र-वचनः । तथा चाऽमरः—'द्वौ तु शारदौ । प्रत्यग्राप्रतिभाविति' पठति । क्व चाऽस्य प्रत्यग्राऽर्थकस्य प्रयोग इति चेद् 'रज्जुशारदम् उदकम्' इतीहैव वृत्तिकार-धृत उदाहरणे इति गृहाण । सद्यो रज्जूद्धृतम् उदकं प्रत्यग्रम् अनुपहतं रज्जु-शारदम् उच्यते । ध्रुवं जानपदी वृत्तिर् एषा— ग्रामे ग्रामे रज्ज्वा प्रत्यग्रम् उदकम् उदञ्चन्ति कूपात् पुरा लौकिका यथाऽद्यत्वे । प्रयोगस् त्व् अस्य रज्जु-शारद-शब्दस्य नाऽन्यत्र ग्रन्थाऽऽरूढः समुपलभ्यते । अहो अत्यर्थम् अनुगृहीताः स्मो वृत्तिकारेण व्यवहार-प्रवेदनेन ।

मिश्र-शब्दः सम्पृक्तार्थ-वचन इति न न विदितं विदाम् । परम् अयं संहित-पर्यायोऽप्य् अस्तीति विरला विदुः । 'मिश्रं चाऽनुपसर्गमसन्धौ'[2] इत्य् अनेन सन्धेर् अन्यत्राऽर्थे वर्तमानं मिश्रम् इत्य् एतद् उत्तरपदम् अन्तोदात्तं भवति तृतीयान्तात् परम् । यथा 'गुडधाना' इत्य् अत्र । सन्धौ तु ब्राह्मण-मिश्रो राजेति नैष स्वरः । ब्राह्मणैः संहित ऐकार्थ्यम् आपन्न इति च तदर्थः ।

गर्हायां गम्यमानायां चेलादिशब्दा उत्तरपदान्य् अन्तोदात्तानि भवन्ति तत्पुरुषे समास इति 'चेलखेटकटुककाण्डं गर्हायाम्'[3] इति सूत्रतो निश्चिन्मः । वृत्तौ 'पुत्रचेलम्', 'भार्याचेलम्' इति चोदाहृतम् । इहैव 'नगरखेटम्', 'दधिकटुकम्' 'प्रजाकाण्डम्' इत्यादयोऽपि पूर्वपदार्थ-कुत्सां गमयन्तः शब्दाः स्थिताः । मन्ये पुरैतान् प्रचुरं प्रयुयुजिरे लोका दिने दिने संव्यवहरन्तः । तथैव हि सूत्रकारेणैतेषु स्वरस्याऽन्वाख्यानं सूपपन्नं भवति ।

'गाधलवणयोः प्रमाणे'[4] इति प्रमाण-वाचिनि तत्पुरुषे समासे गाध-लवणयोर् उत्तरपदयोः पूर्वपदस्य प्रकृति-स्वरत्वं विधत्ते । 'अरित्रगाधम् उदकम्', 'गोलवणम्', 'अश्वलवणम्' इत्यादीन्य् उदाहरणानि । नाऽत्र प्रमाण-

---

१. पा० ६,२,९ । २. तत्रैव ६,२,१५४ । ३. तत्रैव ६.२.१२६ । तत्रैव अ ६.२.४ ।

वाची शब्दः कश्चिद् अस्ति । स्वर-व्यङ्ग्यं हि प्रमाण-विशेष-विषयत्वम् अरित्र-गाधादीनाम् । अरित्रस्य गाधम्, गोर् लवणम् इति षष्ठीसमासौ । अरित्रेण स्पृश्यमानं तलम्, तत्-प्रमाणम् इत्यर्थः । गवे यावद् दीयते तावद् इत्यर्थः । अरित्र-गाधादीनाम् एतज्-जातीयका अर्थ-विशेषा भवन्तीत्य् अत एव सूत्राद् इदम्प्रथमतयोपलभामहे ।

मात्रा-शब्द औणादिकः । स 'स्त्रियां मात्रात्रुटौ पुंसि लवलेशकणाणव' इति, 'अल्पे च परिमाणे । परिच्छेदे' इति चाऽमरे पाठः । भगवान् सूत्रकारस् तु 'मात्रोपज्ञोपक्रमच्छाये नपुंसके'[1] इति सूत्रे यत्राऽर्थे मात्रा-शब्दं परिगृह्णाति सोऽन्यादृशः । मात्रा-शब्द इह तुल्य-प्रमाणे वर्तते । वृत्ति-विषय एव स तादृग् अर्थो न तु वाक्य इति वृत्तिकारः । मात्रादिपूत्तरपदेषु नपुंसक-वाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृति-स्वरं भवतीति सूत्रार्थः । 'भिक्षामात्रं न ददाति याचित' इत्य् उदाहरणम् । भिक्षायास् तुल्य-प्रमाणम् इति 'भिक्षामात्रम्' इत्य् अस्वपद-विग्रहः षष्ठी-समासः ।

अयं चाऽपरो विशेषः स्वर-सूत्राणां यद् अत्र पूर्वत्राऽष्टाध्यायाम् अनुक्तोऽविहितोऽप्य् अर्थः समुच्चीयते, ऊनं च परिपूर्यते । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्'[2] इत्यादिषु सूत्रेषूपज्ञाद्युत्तरपदस्य तत्पुरुषस्य नपुंसकत्वं विधीयते । मात्रान्तस्य तु क्वचिद् अपि नपुंसकत्वं न विहितम् । तद् अपीष्यत इत्यतः स्वरसूत्रात् प्रतीयते ।

पूर्व-शब्दो वृत्ति-विषये भूतपूर्व-शब्दार्थम् आहेति कुतो विजानीमः ? 'पूर्वे भूतपूर्वे'[3] इत्यतः स्वर-सूत्राद् एव, नाऽन्यतः । 'आढ्यपूर्वः', 'दर्शनीयपूर्वः' । आढ्यो भूतपूर्व इत्यादिर् अर्थः । अध्यापकपूर्व इत्य् अपि शक्यम् उदाहर्तुम्, पूर्वं योऽभूद् अध्यापकः ( न सम्प्रति सः ) इत्यर्थं चाऽभिधातुम् ।

'भार्यासौश्रुतः', कुमारीदाक्षा', 'ओदनपाणिनीयाः', 'भिक्षामाणवः', 'भयब्राह्मण' इत्यादीनां प्रत्येकं कस्मिन्न् अर्थे प्रयोगोऽप्रथतेति कुतः प्रतीमः ? 'गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे'[4] इति स्वसूत्राद् एव । इदं हि सूत्रं गोत्र-प्रत्ययान्ताऽन्तेवास्यादि-वाचिषूत्तरपदेषु पूर्वपदस्याद्युदात्ततां शास्ति तत्पुरुषे समासे क्षेपे गम्यमाने । भार्यासौश्रुत इति भार्या-प्रधानं सुश्रुतोऽपत्यम् उच्यते । भार्याधीनः सौश्रुत इति च क्षिप्यते । कुमार्यादि-लाभ-कामा दाक्ष्यादिभिः

१. पा० ६,२,१४ । २. तत्रैव, २,४,२१ । ३. तत्रैव, ६, २,२२ । ४. तत्रैव, ६,२,६९ ।

प्रोक्तानि शास्त्राण्य् अधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते। भिक्षां लप्स्य इति यो माणवः सम्पद्यते स उच्यते भिक्षामाणव इति। यश् च राजदण्डादि-भयाद् ब्राह्मणः सम्पद्यते स उच्यते भयब्राह्मण इति। भार्या-सौश्रुत इत्य् एतद् एकं परिहायाऽन्यत्र सर्वत्र 'सुप्सुपे'ति समासः।

अच्कौ प्रत्ययौ कृत्सु कर्त्रर्थे सामान्येन विहितौ। धात्वर्थाऽनुष्ठानेऽशक्तौ गम्यमानायाम् अपि तौ साधू भवत इत्य् 'अच्कावशक्तौ'[1] इति स्वरसूत्रं गमकम्। यदा चाऽशक्तिर् गम्यते तदाऽच्क-प्रत्ययान्तम् उत्तरपदं नञः परम् अन्तोदात्तं भवतीति सूत्राऽर्थः। अपचो ब्राह्मणः। अविलिखः कुमारः। अपचो दीक्षित इत्यत्राऽशक्तेर् अनवगमात् पूर्व-पदस्य नञः स्वरः। 'आक्रोशे च'[2] इति चाऽनन्तरं सूत्रम्। आक्रोशे गम्यमाने स एव स्वरः। अपचोऽयं जाल्म इति कश्चित् पक्तुं समर्थोऽप्य् एवम् आक्रुश्यते। अविदित-स्वरसूत्रोऽत्राऽर्थे शब्द-शक्तिं न गृह्णीयात्, अपच इत्युक्ते न पचतीत्यर्थम् एव विजानीयात्।

यो हि 'प्रथमोऽचिरोपसम्पत्तौ'[3] इति स्वर-सूत्रं न वेद, स सुतरां न वेद 'अयं प्रथम-वैयाकरणोऽतो न साधीयः शब्दान् विजानातीति'—वाक्यांऽर्थम्। बाढं व्यामुह्येद् अत्र सुमेधा अपि। अयं हि सूत्रार्थः—अचिरोपसम्पत्तिर् अचिरोपश्लेषः। यो हि सम्प्रति गुरुम् उपश्लिष्टो व्याकरणम् अध्येतुं प्रवृत्तः स उच्यते प्रथम-वैयाकरण इति। तत्राऽर्थे प्रथम-शब्दः पूर्वपदं प्रकृति-स्वरं भवति। महद् उपकृता वयं सूत्रकारेण स्वरविधि-व्याजेन व्यवहारं व्याचक्षाणेन। स्थानेऽयं सुहृद्भूत इति भण्यते भाष्यकारेण।

'पूजनात् पूजितमनुदात्तं (काष्ठादिभ्यः)'[4] इति स्वर-सूत्रेणाऽपि वाग्व्यवहार-विशेषं विज्ञापिता वयं सूत्रकारेणेति धन्यं तं भगवन्तं वदामः। पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितम् अनुदात्तं भवतीति सूत्राऽर्थः। 'काष्ठाऽध्यापकः', 'दारुणाऽध्यापकः' 'घोराऽध्यापकः', 'अद्भुताऽध्यापक' इत्यादीन्य् उदाहरणानि। असमासेऽपीत्थम्भूतः प्रयोगो भवति 'दारुणम् अध्यापकः', 'दारुणम् अधीते' इति च, केवलं तत्रोक्तः स्वर-विधिर् न। काष्ठादयश् चैतेऽद्भुत-पर्यायाः पूजा-वचना भवन्तीति पदमञ्जर्यां हरदत्तः। काष्ठं दारु इत्यनर्थान्तरम्। घोर-दारुणौ च क्रूर-वचनौ प्रतिभय-वचनौ च लोके प्रसिद्धौ। दारुणम् अद्भुतं भवतीति त्व् अस्माद् एव सूत्राद् अवस्यामः। इदं चाऽऽकूतकरं भविष्यति विदां प्रचरन्त्याम् उर्दू-भाषायां 'ग़ज़ब्' इति शब्दः प्रयुज्यते

१. पा० ६,२,१५७। २. तत्रैव ६,२,१५८। ३. तत्रैव ६,२,५६। ४. तत्रैव ८,१,६७।

दारुण-समानार्थकोऽध्यापनादिविषये चाद्भुत-पर्यायो भवतीति । बह्वत्र चिन्तनीयं वाङ्निरूपण-परैर् अधुनातनैः कोविदैर् दारुणादीनाम् अर्थान्तर-सङ्क्रमे क × क्रम इति ।

**औपचारिका प्रयोगः —**

उपचार-विषयेऽपि काश्चिद् दिशः प्रदर्शिताः सूत्रकारेणेति ताः सम्प्रति निर्दिशामः ।

'कलाप्यश्वत्थयवबुसाद् वुन्'[1] इति 'काले देयम् ऋणम्' इत्य् अर्थम् अभिधातुं वुनं विधत्ते । कलापिनि काले देयम् ऋणं कलापकम् उच्यते अश्वत्थे कालेऽश्वत्थकम्, यवबुसे काले यवबुसकम् इति । परं मुख्यया वृत्त्या नैते कलाप्यादयः कालवचना भवन्ति । सत्यम् । यस्मिन् काले मयूराः कलापिनो जात-पिच्छा भवन्ति स उपचारतः कलापीति व्यपदिश्यते । यस्मिन् कालेऽश्वत्थाः फलन्ति सोऽश्वत्थः, यस्मिंश् च यवबुसं सम्पद्यते स यवबुसम् इति ।

'तदस्य सोढम्'[2] इति सूत्रे यः सोढोऽर्थो भवति तद् वाचकात् प्रथमान्ताद् यथाविहितं प्रत्ययो भवति शैषिक इत्याह । 'नैशः' 'नैशिकः' । 'प्रादोषः', प्रादोषिकः । नैशो ब्रह्मचारी स उच्यते यस्य निशायाम् अध्ययनं सोढम् अभ्यस्तं भवति । निशा-सहचरितम् अध्ययनम् अत्र निशा-शब्देनोच्यते उपचारात् । ततो निशा-शब्दात् प्रत्ययः ।

'तदधीते तद्वेद' इत्य् अधिकारे 'वसन्तादिभ्यष्ठक्'[3] इति सूत्रे पठति सूत्रकारः । तत्र वसन्तादिभ्यः शब्देभ्यो वसन्तादि-सहचरिता ग्रन्था गृह्यन्त उपचारात् । वसन्त-सहचरितं ग्रन्थम् अधीते वेद वेति वासन्तिकः । अत्र गणेऽथर्वन् इति पठ्यते । तत्राऽप्य् उपचार आश्रयणीयो भवति । अथर्वणा प्रोक्त आम्नायोऽप्य् उपचाराद् अथर्वा, तम् अधीते वेद वेत्य् आथर्वण आथर्वणिकश् च । उक्तं वक्तव्यम् इति वाचम् अवसाययामः ।

यदि तनुरपि तोषो मत्कृताद् वाग्विमर्शाल्
लसति हृदि बुधानां वाचि निष्ठां गतानाम् ।
यदि च भवति बोधो वाक्सरण्याः कियांश्चिद्
अभिनव-पठकानां स्यात्तदा धन्यता मे ॥

———

१. पा० ४, ३, ४८ ।   २. तत्रैव ४, ३, ५२ ।   ३. तत्रैव ४, २, ६३ ।

# काव्यस्य प्रयोजनं लक्षणं च

*रविशङ्करो नागरः

## काव्यस्य प्रयोजनम्

वाल्मीकि-कालिदासाऽऽदीनां कवि-पुङ्गवानां काव्यं पठंश् चर्वयंश् च सहृदयः परमानन्द-लहरी-परिपूरित-गम्भीरतर-निजहृदय-महाह्रदो नाऽन्यत् किञ्चित् संवेदयते रस-चर्वणा-समये ऋते स्वसंवेदन-सिद्ध-परमानन्दात्। अतः काव्य-प्रयोजन-पर्यालोचन-प्रसङ्ग आनन्द एव काव्यस्य मुख्यं पार्यन्तिकं फलम्। यद्यपि भामह-भट्टोद्भट-मम्मट-प्रभृतिभिर् आलङ्कारिकैर् अन्यान्य् अपि धर्माऽर्थ-काम-कला-वैचक्षण्यादीनि शिवेतरक्षत्यादीनि च काव्यस्य प्रयोजनानि समुदीरितानि,[1] परं काव्यस्य यदि नाऽऽनन्दे पर्यवसानं तर्हि शास्त्रेतिहासाऽऽदिभ्योऽस्य काव्यस्य विदग्ध-जनाऽऽस्वाद्यस्य किंनिमित्तं वैलक्षण्यं भवेत्। चतुर्वर्ग-प्राप्त्युपायान् वेद-शास्त्रेतिहासादीन् अधीयानो लोकस् तेषु काव्यानुशीलन-समुद्भूतस्य विगलित-वेद्यान्तरस्य गिरम् अतीतस्य रस-रूपिणः परमानन्दस्यांऽश-मात्रम् अपि नाऽऽस्वादयति। ब्रह्मानन्द-सहोदरो ह्य् असाव् आनन्दः स्वानुभूति-समयेऽन्यत् सर्वं तिरोदधत् काव्यस्य पठनाच् श्रवणाद् दर्शनाद् एवाऽऽस्वाद्यते, अतः काव्यस्यैवाऽसौ कश्चित् वक्तव्य-विशेषः। आनन्दम् अन्तरा काव्यस्य किं वैशिष्ट्यं प्रभुसम्मित-वेदाऽऽदिशास्त्रेभ्यः सुहृत्-सम्मित-पुराणेतिहासादिभ्यश् च। अतः सत्स्व् अपि काव्यस्याऽन्येष्व् अनिष्ट-ताप-शमनादिषु प्रयोजनेष्व् आनन्द एव तस्य मुख्यं प्रयोजनं स्वीकरणीयम्। ये च राजपुत्र-प्रभृतयोऽवश्यं संस्करणीयास् तेऽपि हृदयाह्लाद-क्षमस्य काव्यस्याऽनुशीलनात् परमानन्द-लहरी-निमज्जन-विशदीकृताऽन्तःकरणा लोक-शास्त्र-व्यवहार-निपुणा व्युत्पन्नाश् च भवन्तीत्य् आनन्द एव तत्र प्रयोजकः। यद्य् आनन्दाऽनुभूतिर् न स्यात् काव्यात्, तर्हि राजपुत्रादीनाम् अन्येषां च कठोर-मतीनां तत्र प्रवृत्तिर् एव न स्यात्। परं काव्य-मुखेन रसास्वाद-सुखम् अनुभवन्तस् ते धर्माऽधर्म-विवेकं प्राप्नुवन्तीति रसास्वाद एव काव्यस्य मुख्यं प्रयोजनं प्रतिपत्तव्यम्।

---

*एम.ए. पी-एच. डी.; संस्कृत-विभागे प्राध्यापकः, दिल्ली-विश्वविद्यालयः, दिल्ली।

यद्यपि काव्यं लोकान् शुभे कर्मणि प्रवर्तयति, अशुभाच् च निवारयति, परं काव्यस्य न केवलं व्यवहार-ज्ञान एवोपयोगिता, अपितु सहृदय-हृदयाऽऽह्लाद-कत्वेऽपि । कवेः काव्य-प्रयोजनं यशः-प्राप्ति-धनोपार्जनाऽनिष्ट-नाशादिकम् अपि भवेन् नाम, परं रसाऽऽस्वादयितुः सहृदयस्याऽऽनन्द एव मुख्यं प्रयोजनं पर्यवस्यति । काव्य-रसाऽऽस्वाद-समये रसयिता सहृदय आनन्द-सन्दोहे प्लवमानो नाऽन्यत् किञ्चिद् ज्ञातुं प्रभवति । आनन्द-कल्लोल-परिपूरित-निज-हृदय-सागरः सन् रस्यमानता-सारैकप्राणं रसम् आस्वादयन् सहृदयो न किञ्चिद् वेत्ति शुभम् अशुभं वा रसाऽनुभूति-समये । एवं हृदय-संवादिनि रस-चर्वणाऽऽत्मके परमानन्दे सर्वत्र व्याप्ते नाऽन्यत् किञ्चिद् अवशिष्यते, परमाऽऽह्लाद-महोदधि-तरङ्ग-समुल्लासम् अन्तरा ।

भामहादि-पण्डितराजजगन्नाथाऽन्तानां सर्वेषाम् आलङ्कारिकाणां मतेन काव्यस्य प्रयोजनेष्व् आनन्द एव मूर्धन्यताम् अवगाहते । तथाहि—धर्माऽर्थकाम-मोक्षेषु कलासु च वैचक्षण्यं काव्य-कृतम् इति वदताऽपि भामहाऽऽचार्येण 'करोति कीर्तिं प्रीतिं च साधु-काव्य-निषेवणम्' इति[1] च प्रदर्शयता प्रीतिर् एव काव्यस्य प्रयोजनत्वेनाऽभ्युपगता । मम्मटभट्टेनाऽपि 'काव्यं यशसेऽर्थकृते' इति व्याहरताऽपि सद्यः परनिर्वृत्ति-करणेन निर्वृत्तिर् एव काव्यस्य प्रमुखं प्रयोजनं समाख्यायि[2] । रसिक-जन-ललाम-भूतेनाऽभिनवगुप्तपादाऽऽचार्येणाऽपि स्वकीये ध्वन्यालोक-लोचने यद्यपि 'श्रोतॄणां व्युत्पत्ति-प्रीती यद्यपि स्तः, यथोक्तम्—धर्मार्थ-काम-मोक्षेषु वैचक्षण्यं कलासु च' इति प्रदर्शितम्, तथाऽपि 'तत्र प्रीतिर् एव प्रधानम्' इति लिखता काव्य-प्रयोजनेषु प्रीतिर् एव प्राधान्येन स्वीकृता[3] ।

रस-प्राधान्य-वादिनो भट्टनायकस्याऽपि मतम्—

वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया ।
तेन नाऽस्य समः स स्याद् दुह्यते योगिभिर्हि यः ॥[4]

इत्येवम् उपस्थापयताऽभिनवगुप्तपादाऽऽचार्येण तस्याऽऽनन्द एव दृढः सम्प्रत्ययः प्रादर्शि ।

---

१. भामहः, काव्यालङ्कारः १,२ । मम्मटः, काव्यप्रकाशः १,२ ।

२. भामहः, काव्यालङ्कारः १,२ ।

३. मम्मटः, काव्य-प्रकाशः १,२ ।

४. शास्त्री, पं० पट्टाभिरामः, आनन्दवर्धन-कृतः ध्वन्यालोकः, लोचन-भाष्यम्, पृ० ४०-४१ ।

५. तत्रैव पृ० ९१-९२ ।

दशरूपकेऽवलोककारेण धनिकेनाऽपि निरतिशय-सुखाऽऽस्वाद-व्यतिरिक्तं नाऽन्यत् प्रयोजनं काव्यस्येति प्रोद्घोषयताऽऽनन्दानुभूतिर् एव काव्यस्य परमं प्रयोजनं सिद्धान्तितम्। यथोक्तम्—

'काव्य-शब्दानां चाऽन्वय-व्यतिरेकाभ्यां निरतिशय-सुखाऽऽस्वाद-व्यतिरेकेण प्रतिपाद्य-प्रतिपादकयोः प्रवृत्ति-विषययोः प्रयोजनान्तराऽनुपलब्धेः स्वाऽऽनन्दाऽनुभूतिर् एव कार्यत्वेनाऽवधार्यते'[1] इति।

वक्रोक्ति-जीवितकारस्य कुन्तकस्याऽपि काव्यस्य पार्यन्तिके प्रयोजन आनन्द एव दृढाऽऽस्था। यथोक्तम् अपि—

चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते॥[2] इति।

अनेन स्फुटं प्रतिपद्यते यद् वेद-पुराणेतिहासादिभ्यः काव्यस्य न कश्चिद् अपकर्षः प्रत्युत वेद-पुराणाऽऽदिष्व् आनन्द-कणस्याऽप्य् अननुभवाद् दुःखेन प्रवृत्तिः। काव्ये त्व् आनन्द-लहरी-समुच्छलेनाऽल्प-मतीनां शास्त्र-पराङ्मुखानाम् अपि सुखेनैव प्रवृत्तिर् भवतीत्य् आनन्द एव परमं प्रयोजनं काव्यस्य।

**काव्यस्य लक्षणम्—**

ननु प्रीति-प्रधानस्य काव्यस्य किं लक्षणम् इति जिज्ञासायां 'शब्दार्थौ सहितौ काव्यम्'[3] इति भामहाचार्येणाऽऽदौ स्वकीये काव्यालङ्काराऽऽख्ये ग्रन्थे भणितम्। अन्यैर् अपि वामन-रुद्रट-मम्मट-हेमचन्द्र-विद्याधर-प्रभृतिभिर् आचार्यैः शब्दार्थयोः साहित्य-लक्षणं काव्य-स्वरूपं प्रतिपादितम्[4]। भामहोपज्ञम् इदम् एव शब्दार्थयोः साहित्य-प्रस्थानं काव्य-लक्षणम् अलङ्कार-ग्रन्थेषु प्रसिद्धम्। आचार्यो दण्डी शब्दाऽर्थयोस् तुल्य-प्राधान्यम् असहमानो-

१. परब, काशीनाथपाण्डुरङ्गः, धनञ्जय-कृतं दशरूपकम्, धनिक-टीका, पृ० १२०।

२. कुन्तकः, वक्रोक्तिजीवितम्, १,५।

३. भामहः, काव्यालङ्कारः, १, ६।

४. (क) काव्य-शब्दोऽयं गुणाऽलङ्कार-संस्कृतयोः शब्दार्थयोर् वर्तते—सूरी, श्रीकृष्णः, वामन-विरचिता काव्यालङ्कारसूत्रवृत्तिः, पृ० ४।

(ख) शब्दार्थौ काव्यम्—रुद्रटः काव्यालङ्कारः, १,२।

(ग) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि—काव्यप्रकाशः, १,३

ऽर्थोपसर्जनकं शब्द-प्रधानं काव्य-लक्षणम् आम्नाति[१]। 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्'[२] इति वदता पण्डितराज-जगन्नाथेनाऽपि दण्डि-मतम् एवोपोद्बलितम्। इदम् एव शब्द-प्राधान्य-प्रस्थानम्।

परं काव्यत्वं न केवलं शब्दाऽर्थयोर् एवाऽवशिष्टम्। शब्दार्थाऽतिरेकी कोऽप्य् अन्यः काव्यस्य धर्म आत्म-स्थानीयो वक्तव्यो भवति। स चाऽऽत्मा 'रीतिर् आत्मा काव्यस्ये'त्य् अभिदधता वामनेनाऽऽदौ निर्दिष्टः[३]। परम् अस्ति महत्य् अत्राऽश्रद्धा ध्वनिकार-पृष्ठाऽनुगानाम् आलङ्कारिकाणाम्। भट्टोद्भटादिभिर् व्याकृता अनुप्रासोपमादयोऽलङ्काराः, वैदर्भी-पाञ्चाली-प्रभृतयश् चाऽवयव-संस्थानीया रीतयः शब्दार्थ-व्यतिरिक्तास् तावन् न दृश्यन्ते, तासां काव्य-कामिनी-शरीर-भूत-शब्दार्थेष्व् एव पर्यवसानात्। वैदर्भी-प्रभृतयो रीतयोऽङ्गभूता एव, अतो न ता अङ्गित्व-पदवीम् अधिरोढुं प्रभवन्ति। नहि हस्त-पादोदरादीनाम् अवयवानां संस्थान-विशेष एवाऽऽत्मत्वेनाऽप्य् उपगतो भवति। वामनस्य काव्य-लक्षणेष्व् इयान् एव विशेषो यद् भामहादिभिः शब्दाऽर्थयोः साहित्य-लक्षणे काव्य-स्वरूपे न कश्चित् काव्यस्याऽऽत्मा प्रोक्तः। परं वामनेन रीतिर् आत्मत्वेन स्वीकृता। अतः काव्यस्याऽऽत्मनाऽपि केनचिद् भाव्यम् इत्यत्राऽऽदौ वामनाऽऽचार्येणैव विचारः कृतः। रीतेर् आत्मत्वम् उपपद्यते नवेतित्व् अन्यत्।

आनन्दवर्धनाऽऽचार्येण ध्वनि-प्रस्थान-प्रजापतिना रीतेर् आत्मत्वं दूषयता कोऽसौ काव्यस्याऽऽत्माऽऽनुप्राणको जीवातु-भूत इति सूक्ष्मेक्षिकया गवेषयता 'काव्यस्याऽऽत्मा ध्वनिर' इति ध्वनिर् एव काव्यस्याऽऽत्मा प्रोक्तः[४]। पश्चाच् च तन्-मतोपोद्बलकेनाऽभिनवगुप्तपादाऽऽचार्येण युक्त्यवष्टम्भ-पूर्वकं रस-ध्वनिर् एव काव्यस्याऽऽत्मा निरधारि[५]। साहित्यदर्पण-कारेण

---

(घ) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्— म. म० पण्डितः शिवदत्तः हेमचन्द्रकृतं काव्यानुशासनम्, पृ० १९।

(ङ) शब्दार्थौ वपुर् अस्य विबुधैर् आत्माभ्यधायि ध्वनिः— विद्याधरः, एकावली १,१३।

१. शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः—दण्डी, काव्यादर्शः, १,१०।

२. जगन्नाथ-विरचितः रसगङ्गाधरः।

३. सूरी, श्रीकृष्णः, वामन-कृता काव्यालङ्कारसूत्रवृत्तिः, पृ० १५-१६।

४. काव्यस्यात्मा ध्वनिर् इति बुधैर्यः समाम्नातपूर्वः—ध्वन्यालोकः, १,१।

५. शास्त्री, पण्डितः पट्टाभिरामः, आनन्दवर्धन-कृतः ध्वन्यालोकः, लोचनभाष्यम्, पृ० ८६-८७।

विश्वनाथाऽऽचार्येणाऽपि 'वाक्यं रसात्मकं काव्यम्' इति व्याहरता काव्यस्याऽऽत्मा रस एव प्रत्यपादि[१] ।

एवं काव्य-लक्षण-निरूपण-प्रसङ्गे केचिच् शब्दार्थ-साहित्य-वादिनः, अन्ये शब्द-प्राधान्य-वादिनः, इतरे रीति-वादिनः, अपरे ध्वनि-पक्षपातिनश् चाऽऽचार्या विसंवादि काव्यलक्षणम् उपनिबध्नन्ति ।

वस्तुतस् त्व् अस्माकं मते मम्मटाऽऽचार्यः स्वकीये काव्य-लक्षणे प्राचीनानां भामहादीनाम् अर्वाचीनानाम् आनन्दवर्धनादीनाम् आचार्याणां च विसंवादि मतम् उपस्थापयन् मत-द्वयस्य परस्परं समन्वयम् आतन्वन्न् अनवद्यं काव्य-लक्षणं बध्नाति । भट्टोद्भटादिभिर् अलङ्कार-तन्त्र-प्रजापतिभिः काव्ये वाच्य-वाचक-धर्माणां काव्य-कामिन्या बाह्य-शोभोपकरण-भूतानाम् आभूषण-कल्पानाम् अनुप्रासोपमादीनाम् अलङ्काराणां काव्ये प्राधान्यं प्रपञ्चितम् । तथा चोक्तम् आचार्येण रुय्यकेन—

'तदेवम् अलङ्कारा एव काव्ये प्रधानम् इति प्राच्यानां मतम् ।'[२]

अत एव भामहादयः शब्दार्थ-साहित्याऽऽत्मकं काव्य-स्वरूपम् अभिदधति[३] । तेषां मते काव्ये शब्दस्य चारुत्वम् अनुप्रास-यमकादिभिः शब्दाऽलङ्कारैर् अर्थस्य च चारुत्वम् उपमोत्प्रेक्षादिभिर् अर्थालङ्कारैः सम्पद्यते । अतोऽनुप्रासोपमादिभिर् उपस्कृतौ रमणीयौ शब्दाऽर्थौ काव्यम् । तेनैव काव्य-लक्षणे प्राचीनाऽऽचार्यैः शब्दाऽर्थौ काव्य-लक्षण-वाक्यस्य घटकत्वेनोपात्तौ । शब्दाऽर्थोपस्कारकाणाम् अनुप्रासोपमादीनां च तेषां लक्षण-ग्रन्थेषु सविस्तरं प्रपञ्चः । लक्षण-ग्रन्थानाम् अभिधानं सर्वथाऽन्वर्थकं काव्यालङ्कारसार-संग्रहादीतिरूपेण । इत्थं भामहोद्भटादि-पद्धतिम् अनुसरन् मम्मटः 'शब्दार्थौ काव्यम्' इति वदंस् तयोः सालङ्कारत्वम् अपि स्वकीये काव्यलक्षण उपनिबध्नाति । अत एव सालङ्कारौ शब्दार्थौ मम्मटस्याऽभितौ । एवं मम्मटस्य काव्य-लक्षणे चिरन्तनानाम् आचार्याणां प्रभावः सुस्पष्ट एव । शब्दाऽर्थयोः साहचर्यं काव्ये परम-रामणीयकम् आदधाति । अलङ्कृतौ च शब्दार्थौ काव्ये परमशोभा-भ्राजिष्णू भवतः । शब्दोऽर्थस्याऽर्थः शब्दस्य च सहकारितां प्रत्यवेक्षते । अतो नैकोऽन्यं विनाऽवस्थातुम् अर्हति । अत एव

१. विश्वनाथः, साहित्यदर्पणः, १,३ ।

२. राघवन वी० (डा.) रुय्यक-कृतम् अलङ्कारसर्वस्वम्, पृ० १० ।

३. 'शब्दार्थौ सहितौ काव्यम्'—भामहः, काव्यालङ्कारः, १,१६ ।

भामहादिभिर् आचार्यैः सहितयोः शब्दार्थयोः काव्यत्वम् अभिदधद्भिः साहित्य-प्रस्थानं समुज्जृम्भितम् ।

वयं त्व् इत्थं प्रतीमः। भामहादीनाम् आलङ्कारिकाणां काव्य-लक्षणं न खलु सर्वथा निर्दुष्टम्। यतो न काव्ये सर्वदाऽनुप्रासोपमादयोऽलङ्कारा एव चारुत्वम् आदधति। अपितु काव्येषु स्फुटालङ्कार-रहितान्य् अपि सहृदय-हृदयावर्जकानि पद्यानि दृश्यन्ते। तथाहि—

यः कौमार-हरः स एव हि वरस्ता एव चैत्रक्षपाः।
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः॥
सा चैवाऽस्मि तथाऽपि तत्र सुरतव्यापारलीला-विधौ।
रेवारोधसि वेतसी-तरुतले चेतः समुत्कण्ठते[१]॥

अपि च—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीला-कमल-पत्राणि गणयामास पार्वती॥

इत्य् अनयोः स्थलयोर् न कश्चित् काव्य-चारुत्वाऽऽधायकः स्फुटोऽलङ्कारः प्रतीयते। अतोऽलङ्कारैर् उपस्कृतम् एव काव्यं यदि जीवति, तदेदं पद्य-द्वयं काव्य-पदवीतः प्रच्युतम् एव स्यात्। परं नैतन् निर्मल-प्रतिभावतां काव्याऽऽनन्द-मकरन्द-षट्पदानां साहित्यिकानाम् अनुभवाऽनुकूलम्। एतादृशेष्व् अपि स्फुटालङ्कार-विरहितेषूदाहरण-वाक्येष्व् अनुभूयते एव सहृदयैः कोऽप्य् अपूर्वः काव्यानन्दः। अनुभव-सिद्धश् चाऽर्थो न बालेनाऽप्य् अपलपितुं शक्यः। अतोऽलङ्कार-विरहेऽपि रसानुगुणाऽर्थ-विशेषोपनिबन्धनात् काव्ये शोभातिशयो विभाव्यते। अतः 'सालङ्कारौ' एव शब्दार्थौ यदि काव्यत्वेनाऽभ्युपेयेते, तर्हि रस-सिक्तात्मनां कालिदासादीनां महाकवीनां काव्यं काव्य-कोटौ न गण्येत। न च, तथेष्टापत्तिः, कालिदासादीनां सहृदय-हृदयावर्जक-काव्यानां काव्यत्व-रूपेण सकलालङ्कारिकाऽनुभव-सिद्धत्वात्। अत एव प्राचीनाऽऽचार्य-मत-सरणिम् अनुसरताऽपि मम्मटेन न सर्वथा 'सालङ्कारौ' इति पदं काव्यलक्षण-घटकत्वेनाऽनुप्रवेशितं स्वकीये काव्य-लक्षणे, अपितु 'अनलंकृती पुनः क्वापि' इति रसवादि-मताऽनुमतं 'सगुणौ' इति पदं चाऽनुप्रवेशयता निरलङ्कारयोः माधुर्यौजः-प्रसाद-गुण-विशिष्टयोः शब्दाऽर्थयोर् अपि काव्यत्वं भणितम्। न हि काव्यत्वम् अलङ्कारेष्व् एवाऽवशिष्टम्, प्रत्युत निरलङ्कारेभ्यः शब्दार्थेभ्योऽपि विविध-श्रृङ्गार-करुण-रौद्र-वीराऽऽदि-रसाऽऽवेश-वशात् परमाह्लादः सहृदय-

१. करमरकरः, र० ड०, मम्मटकृतः काव्यप्रकाशः, पृ० १७।

हृदयाऽनुभव-सिद्धः समुन्मिषति, तत्राऽपि काव्यत्वस्याऽनपलपनीयत्वात्। तथा चोक्तं प्रतिहारेन्दुराजेन—

'लक्ष्ये चाऽलङ्काररहितम् अपि केवलगुण-सत्क्रियमाणशब्दार्थ-शरीरं काव्यं दृश्यते।

यथा—अमरुकस्य कवेर् अनिबद्धशृंगाररसस्यन्दी श्लोकः—

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे।
विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम्॥
असहनसखीश्रोत्रप्राप्तिप्रसादससंभ्रमम्।
विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः॥

न खल्व् अत्राऽर्थाऽलङ्कारः कश्चित् परिदृश्यते। अथ माधुर्यौजोभ्यां परिबृंहितस्य प्रसादस्य विद्यमानत्वात् काव्यरूपता' इति[1]।

एवं नव्यानां काव्येऽलङ्कार-प्राधान्यमत-विध्वंसिनां ध्वनेश् च काव्यात्मत्व-समर्थकानाम् आनन्दवर्धनादीनाम् आचार्याणां ध्वनि-पक्षोऽपि मम्मटेन काव्य-लक्षणेऽनुप्रवेशितः। गुणानां रस-धर्मत्वाद् गुणाऽभिव्यञ्जक-सामर्थ्येन शब्दार्थयोश् चाऽपि सगुणत्व-धर्मस्योपपन्नत्वात्, निरलङ्कारस्याऽपि काव्यस्य रस-व्यञ्जकतया सगुणतया च काव्यत्वस्य शक्योपपादत्वात्, मम्मटाचार्येणाऽऽनन्दवर्धनाचार्यस्य ध्वनि-सिद्धान्तोऽपि स्वकीये काव्य-लक्षणे समावेशितः। न हि सर्वथा सालङ्कारयोर् एव शब्दार्थयोः काव्यत्वम् इष्टं मम्मटस्याऽपि-त्व् अलङ्कार-विरहितयोः सगुणयोर् अपि शब्दार्थयोः काव्यत्वम् अव्याहतम्। अत एव 'यः कौमार-हरः' इत्यत्र पूर्वोदाहृते पद्ये स्फुटाऽलङ्कार-विरहेऽपि विप्रलम्भ-शृङ्गारस्याऽभिव्यक्तेर् उत्तमोत्तमं काव्यं सिद्धम्। तथा चोक्तं प्रदीपकारेण—'अनलङ्कृती पुनः क्वापि' इति काव्यलक्षण-घटकं वाक्यांशं विवृण्वता—

'यतो रसादिरलङ्कारश् च द्वयं चमत्कारहेतुः। तथा च यत्र रसादीनाम् अवस्थानं न स्फुटालङ्कारापेक्षा'[2] इत्यादि।

यच् च विश्वनाथाऽऽचार्येण विभावना-विशेषोक्ति-दर्शनात् सालङ्कारत्वम् अस्य पद्यस्य प्रदर्शितम्[3], तत् तयोर् अस्फुटत्वात् सहृदय-हृदयाऽनास्वाद्यत्वाच्

१. बनहट्टी, नारायणदासो, उद्भटकृतः काव्यालङ्कारसारसंग्रहः, इन्दुराजकृता लघुवृत्तिटीका, पृ० ८२।

२. म. महोपाध्यायः, पण्डितः दुर्गाप्रसादः, गोविन्दकृतः काव्यप्रदीपः, पृ० ८।

३. शास्त्री, शालग्रामः, श्रीविश्वनाथकविराजकृतः साहित्यदर्पणः, पृ० १७।

च व्यपाकृतं भवति। अपि च सम्भवन्न् अपि यद्य् अलङ्कारः सहृदय-हृदयं नाऽऽवर्जयति, तर्हि तस्याऽसत्कल्पत्वम् एव। आस्वाद्योऽत्र विप्रलम्भ-शृङ्गारः। अत एव तस्यैव प्राधान्यम्। नहि विभावना-विशेषोक्तिकृतैव सहृदय-चमत्कृतिर् अत्र। आस्वाद्यस् त्व् असाव् अलौकिको रसो यस्य चारुत्व-साम्राज्यं नालङ्कार-मुखप्रेक्षम्। रसे सति ह्य् अलङ्कारा अहमहमिकया आपतन्ति तम् उपस्कर्तुं कटककुण्डलादिलौकिकाऽलङ्कारवत्। अन्यथा निर्जीवो देहो यथा नाऽलङ्कारैः काम् अपि शोभां प्रकटयति[1], प्रत्युत वैरस्यम् एवाऽऽविर्भावयति, तथाऽलङ्कारा अप्य् अनुप्रासोपमादयोऽङ्गिनो रसस्याऽभावे निर्जीव-देहोपरि-धृत-कटक-कुण्डलाऽऽदिलौकिकाऽलङ्कारवत् परम-वैरस्यम् एव विदग्धानां मनस्स्व् आतन्वन्ति, दूरे चर्चा चारुतायाः। अतोऽलङ्कारा एव काव्ये परम-शोभाधायका नाऽऽकलनीयाः, तद्-अभावेऽपि रस-कृतं गुण-कृतं वा काव्य-चारुत्वम् अक्षुण्णम् इत्थं मम्मटेन 'शब्दाऽर्थयोः' सालङ्कारत्वम् अप्य् उररीकुर्वता न खलु सर्वथाऽलङ्काराणाम् एव काव्ये प्राधान्यं सूचितम्, प्रत्युत यं रसं विना-ऽलङ्कारा अलङ्कारताम् एव नाऽऽप्नुवन्ति, असौ ध्वन्यमानो रसोऽपि गुणानां भङ्ग्या काव्य-शोभाधायकः प्रोक्तः।

अपरत आनन्दवर्धनाऽऽचार्यस्य ध्वनि-सिद्धान्तेऽलङ्काराणां स्थानम् अवरम्। भामहोद्भटादीनां शब्दार्थ-साहित्य-प्रस्थानेऽलङ्काराणाम् एव प्राधान्यम्। परं काव्ये चारुत्वं न सर्वथाऽलङ्कार-कृतम्। निरलङ्कारस्याऽपि काव्यस्य ध्वनि-मुखेन चारुत्वाऽऽधायकत्वान् नाऽपि चारुत्वं सर्वथा ध्वनिपृष्ठाऽवलम्बि, निर्ध्वनेर् अपि काव्यस्याऽनुप्रासोपमाद्यलङ्कार-कृत-चारुत्वेन ग्राह्यत्वात्। दृश्यन्ते हि सचेतसोऽनुप्रासोपमादि-कृतं काव्य-चारुत्वम् आस्वादयन्तः। यदि केवलं रस-कृतम् एव चारुत्वं स्यात् तर्हि नदी-पर्वताऽऽदीनां वर्णनं महाकवि-कृतं यत् समुपलभ्यते, तत्राऽकाव्यत्वम् एव स्यात्। तथा चोक्तं पण्डितराज-जगन्नाथेन—

'यत्तु रसवद् एव काव्यम् इति साहित्यदर्पणे निर्णीतम्, तत्र वस्त्वलङ्कार-प्रधानानां काव्यानाम् अकाव्यत्वापत्तेः। न चेष्टापत्तिः। महाकविसम्प्रदायस्याऽऽ-

१. (क) शास्त्री, पण्डितः पट्टाभिरामः, आनन्दवर्धनाचार्यकृतः ध्वन्यालोकः, लोचनभाष्यम्, पृ० १९७।

(ख) वनहट्टी, नारायणदासः, उद्भटकृतः काव्यालङ्कारसार-संग्रहः, इन्दुराज-कृता लघुवृत्तिटीका, पृ० ८१-८२।

कुलीभावप्रसङ्गात्। तथा च जल-प्रवाह-वेगनिपतनोत्पतन-भ्रमणानि कविभिर् वर्णितानि, कपि-बालादि-विलसितानि च।'[१]

इत्थं मम्मटाऽऽचार्येणाऽपूर्वया धिषणया प्राचाम् आलङ्कारिकाणाम् अलङ्कार-प्रस्थानम् अर्वाचाम् आनन्दवर्धनादीनाम् आचार्याणां च ध्वनि-प्रस्थानं स्वकीये काव्य-लक्षणे समन्वितम्। एवं दोष-गुणाऽलङ्कार-ध्वनि-विवेचन-परं मम्मटस्य काव्य-लक्षणं विद्वन्-मनोग्राहिताम् अवलम्बते। वस्तुतस्तु तस्य 'तददोषौ शब्दार्थौ' इत्यादि-काव्य-लक्षणं प्राचीनऽलङ्कार-शास्त्र-पयोधि-निर्मन्थनोद्भूत-महार्घ-महारत्न-कल्पम् अस्ति। अत्र प्राच्य-नव्याऽऽचार्याणां मत-विसंवाद-समन्वयः स्पष्टं लक्ष्यते। भामहादिभिः शब्दार्थयोः सहितयोः काव्यत्वं समाख्यातम्। दण्डिना 'इष्टार्थव्यवच्छिन्ना पदावलिः'[२] इत्य् अभिदधता शब्दस्य प्राधान्यं काव्ये स्वीकृतम्। ध्वनिकारेण ललना-लावण्य-प्रख्यस्य प्रतीयमानार्थस्यैव काव्ये सर्वातिशायित्वम् उद्घोषितम्, अलङ्काराणाञ् च वाच्य-वाचक-धर्माणां सर्वथा न्यग्भावः प्रदर्शितः[३]। परं मम्मटस्य काव्य-लक्षणं सकलाऽलङ्कारिकोद्भावितं सर्वं तत्त्वं क्रोडीकुर्वत् परिपूर्णम् इति।

---

१. झा, पण्डितः बद्रीनाथः, जगन्नाथविरचितः रसगङ्गाधरः, पृ० २३-२४।

२. दण्डी, काव्यादर्शः, १,१०।

३. (क) ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यञ्च काव्यं केवलं वाच्यवाचकवैचित्र्यमात्राऽऽश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते, तच्चित्रम्। न तन्मुख्यं काव्यं। काव्यानुकरो ह्य् असौ।
शास्त्री, पण्डितः पट्टाभिरामः, आनन्दवर्धनाचार्यकृतः ध्वन्यालोकः, पृ. ४९५।

(ख) व्यङ्ग्य-व्यञ्जकाभावाभ्याम् एव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण। तत्रैव, पृ० ९७-९८।

# समागता वसन्त-पञ्चमी

शिवप्रसादभारद्वाजः*

इयं वसन्त ! पञ्चमी निशा प्रयाति हैमनी,
भवन्तमागतं समीक्ष्य सा न भाति पञ्चमी।
रसाल-मञ्जरी-प्रियः पिको विरौति पञ्चमी,
समागता समागता प्रिया वसन्त-पञ्चमी॥

पराग-पुञ्ज-पिञ्जरो मरन्द-बिन्दु-तुन्दिलः,
प्ररोह-लोल-कुण्डलो मिलिन्द-वृन्द उद्धतः।
स्फुटत्-कलि-स्वन-ध्वनन्-मृदङ्ग रङ्ग-मङ्गलो,
मधूर्मिल-प्रसून-भृत्-प्रिया-करो विनृत्यति॥

तुषार-विश्लथं रथं किलाऽधिरुह्य मारुत,
समुल्लसत्परागपुञ्ज-वाजिराजि-राजितम्।
प्रगीत-पत्रि-भृङ्ग-वृन्द-वन्दि-नन्दिताऽऽगता,
समागताऽऽम्रमञ्जरी-ध्वजा वसन्त-पञ्चमी॥

रसाल-शेखरेऽखरे मरन्द-बिन्दु-बन्धुरे,
कुशेशयाऽऽशयेऽक्षयेऽथ पाटला-समुच्चये।
मधुव्रतैरभिष्टुता तदर्थमाक्षिपत्यहो,
मधुप्रपा-कपाट-संपुटं वसन्तपञ्चमी॥

जलं नवं, स्थलं नवं, गताऽम्बुदं वियन्नवं,
सुमं नवं, तृणं नवं, निशा नवा, दिनं नवम्।
मनःसु साहसं नवं तनौ च शोणितं नवं,
नवा वसन्त-पञ्चमी बलं नवं धिनोतु नः॥

सरोरुहं तुषार-निर्भयं यदेति पञ्चमी,
भवत्यवेक्ष्य मित्रमागतं स्मरोऽपि पञ्चमी।
समस्त-दुःख-दैन्य-दुर्निशा भवेच्च पञ्चमी,
चिरं जनस्य जायतां मुदे वसन्त-पञ्चमी॥

---

*शास्त्री, एम. ए. एम. ओ. एल्; प्राध्यापकः, विश्वेश्वरानन्द संस्थानम्
पंजाबविश्वविद्यालयः, साधुआश्रमः, होशियारपुरम्।

# पस्पशाऽऽशय-प्रकाशः

वे. वेङ्कटरामशर्मा*

( गताङ्काद् अग्रे )

विचित्रासु भाषा-सञ्चार-गमनिकासूहापोहाभ्याम् असन्देहेनाऽर्थ-विशेष-प्रतिपत्ति-साधनतयाऽपि व्याकरणं सर्वाऽपेक्षणीयम् । रक्षार्थम् अपि व्यवस्थित-रूपाया मर्यादा-परिपालनेन सफलं शास्त्रं यावता व्याकरण-स्थित-लघु-विवरण-वाक्यार्थ-ज्ञानाऽनुकूला व्युत्पत्तिः प्रसीदति तावता पठित-त्रिचतुर-पाठावलीनां तत्र प्रवेशस्य समयः । उत्तमाऽधिकारिणाम् अपि साक्षात्कृत-शब्द-ब्रह्मणां व्याकरणं धनिकानाम् इव स्व-कर-गतं द्रविणं काले व्यवहारायोपयोक्ष्यते । मध्यमाधिकारिणां च लक्ष्य-परिशीलनेनैव प्रसन्न-बहु-शब्द-सन्निधीनां धावन्तम् इव दुर्दमम् अश्वं पाशेन काऽपि बन्धुम् अनुधावतः शङ्कु-लाभ इव मध्ये-पथं व्याकरण-परिचयः प्रयोग-दशायां शब्दान् यथा-स्थानम् अक्लेशेन व्यवस्था-प्याऽऽत्मनोऽप्रच्युतेन पथा सञ्चरितुं सौकर्यम् आवहति । मन्दाऽधिकारिणां तु शिथिल-मतीनां सर्वात्मनोपक्रम्याऽभ्यास-कालाद् आप्रयोग-समयं व्याकरणम् एव सर्वे-दरिद्राणाम् इव सम्पन्न-भवनं शरणं भवति । लक्ष्यमात्र-शरणा मध्य-माऽधिकारिणो लक्षणमात्र-शरणा मन्दाऽधिकारिणश् चेति तेषां भेदः । परमार्थ-तस् तु सत्य् अपि सर्वकार्य-निर्वहण-क्षमे वैभवे लघुतयेव सहाय-सामग्री-प्रतीक्षणं प्रतिक्षणम् अनुपेक्षणीयम् एव शास्त्रम् अखिलानाम् । न वयम् एतावता व्याकरण-पाठम् अन्तरा भाषाभिर् भाषमाणानां साकल्येन विव-क्षिताऽर्थाऽप्रतिपत्तिम् अविवक्षिताऽर्थापत्तिं वाऽभिप्रेमः । किन्तु समायां प्राप्य-देश-प्राप्तौ सुपथा कापथेन च सुपथेव तत्-प्राप्तिः, साधारणे च क्षुत्प्रतिघाते भक्ष्य-भक्षणेनाऽभक्ष्य-भक्षणेन च भक्ष्य-भक्षणेनैव तत्-प्रतिघातः, समानायाम् अर्थाऽवगतौ शब्देनाऽपशब्देन च शब्देनैव तदर्थाऽवगतिर् अखेदाय नाऽप-शब्देनेति परं बोधयामः । 'लोकतोऽर्थप्रयुक्ते शब्द-प्रयोगे शास्त्रेण धर्म-नियमः' इति वार्तिककार-वचनं चोक्तार्थे प्रमाणम् । अस्याऽर्थ-विवक्षया लौकिकैर् नित्येषु शब्देषु प्रयोगायोपादीयमानेषु शास्त्रेण साधुभिर् एव भाषितव्यम्,

---

*विद्याभूषणः, अनन्तशयनम्, त्रिवेन्द्रम् ।

नाऽसाधुभिः; साधुभिश् च भाषमाणाः श्रेयसा युज्यन्त इति च बोध्यत इत्यर्थः। लघ्वर्थम् अप्य् अध्येयम् अखिलैर् व्याकरणम्। यन्महतो महतः शब्दौघान् परिमितैर् एव लक्षणैर् व्याकरणं बोधयति। तस्मान् नाऽन्तरेण व्याकरण लघुनोपायेन शब्दाः शक्या ज्ञातुम्। इत्थं सर्वम् एव व्याकरणं सर्वैर् एवाऽवश्यम् उक्त-प्रयोजनाऽवाप्तयेऽध्येयम् इति साधितम्।

## संस्कृत-व्याकरण-प्रयोजनम्—

सम्प्रति संस्कृत-भाषायां व्याकरणस्य विशिष्य प्रयोजनं किम् इति चिन्तयामः।

अस्य च संस्कृतस्य पुरस्येव बहवः प्राकाराः सन्ति नव-व्याकरणानि। यथा चान्तः-प्राकार एव सन्निहितः पुरस्य परिपालनाय क्षमते, तथा पाणिनीयम् एव तेषु सर्वतः संस्कृत-भाषा-साम्राज्यं स्व-लक्षणैः सुघटितैर् इव सीमोपल-स्तम्भैः साधु गोपायति। ऐन्द्र-चान्द्र-शाकटायनादीनीतराणि तु भूयसा लौकिक-भाषामात्रोपकारकाणि तत्राऽप्य् अपुष्कलानि। कात्यायन-प्रातिशाख्यादीनि च पराणि केवल-वैदिक-भाषाऽनुग्राहकाणि विकलानि। पाणिनीयं तूभय-भाषा-संस्कारकं सर्वाऽभ्यर्हितम्। काल-भेदेन भिद्यमानाऽवस्थायाश् च भाषायाः पाणिनीय-तन्त्र एवाऽनुरूपैर् आवापोद्वापैर् अनुशासनानि वार्तिक-भाष्यादिभिर् अर्हतमानि सुप्रसिद्धं प्रवृत्तानि। पाणिनीयात् परतः किम् अपि व्याकरणं नैवम् अस्यां भाषायाम् उदपादीत्य् एतद् एवाऽस्य व्याकरणस्य सम्पूर्णताम् अभिव्यनक्ति। किम् अधिकेन—तावान् प्रचारोऽस्य पाणिनीयस्य यद् 'अपाणिनीय'-शब्दोऽपशब्द-पर्याय-स्थानम् अप्य् आक्रामन् दृश्यते। पाणिनिश् च स्व-व्याकरणस्य प्रयोजनं सर्व-प्रत्यक्षम् इत्य् एव चिन्तयन् न पृथग् अभिधत्ते। केचित् तु विवरणकारस्यैव प्रयोजन-परामर्शादिकं कृत्यम् इति हेतोः सूत्रकारस्य प्रयोजन-प्रतिपादन-वैमुख्यम् उचितं साधयन्ते। भाष्यकारः पुनर् आदौ सर्वाऽनुग्राहकं प्रयोजनं शब्द-व्युत्पत्त्यात्मकम् 'अथ शब्दाऽनुशासनम्' इत्य् अनेनाऽभिधाय विशिष्य तद् आह—'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति। रक्षार्थम् ऊहार्थम् आगमार्थं लघ्वर्थम् असन्देहार्थं च व्याकरणम् अध्येयम् इति वर्णयन्न् अखिलम् अपि प्रयोजनम् उक्तं वैदिक-भाषार्थं विनियुयुजे। सूक्ष्मतस् त्व् आगमं विनाऽन्येषाम् अवैदिक-भाषार्थम् अप्य् उपयोगः सम्भवत्य् एवेति सामान्य-प्रयोजन-प्रस्तावेऽस्माभिर् उपक्षिप्तं न विस्मर्तव्यम्। अनन्तरं चाऽऽनुषङ्गिकाणि प्रयोजनानि विचिन्वन् 'तेऽसुराः; दुष्टः शब्दः' इत्यादीन्य् अनेकानि प्राति-

स्विक-रूपाणि विविञ्चस् तत्राऽपि प्रायशो वैदिक-सम्प्रदायेष्व् एव श्रद्धां बद्धादरो निधत्ते। वार्तिककारस्य तु 'लोकतोऽर्थ-प्रयुक्ते शब्द-प्रयोगे शास्त्रेण धर्म-नियमः' इति प्रयोजनं पूर्वम् एव सूचितम्। तत्राऽप्रयुक्तानां शब्दानां विषये व्याकरणस्य वैयर्थ्यं परं परिहर्तव्यम् आस्ते। सन्ति वै शब्दा अप्रयुक्ता ऊष-तेर-चक्र-पेचेत्यादयः। शब्दस्य प्रयुक्तत्वम् अप्रयुक्तत्वं वाऽन्वय-व्यतिरेकाभ्याम् अर्थस्योपयोगम् अनुपयोगं वा नाऽऽश्रयतः। किन्तु शब्दस्यैव। तद् उक्तं पूर्वपक्ष-वार्तिके— 'अप्रयोगः प्रयोगान्यत्वात्' इति। अस्य अर्थसत्त्वेऽपि शब्दस्याऽप्रयोग एव न्याय्यः। तत्राऽर्थेऽन्येषाम् एव शब्दानाम् उपयोगाद् इत्य् अर्थः। एवं सन्तु कामम् अप्रयुक्ताः, अप्रयुक्तेष्व् अपि लक्षणं सफलम् एव। कथम्? दीर्घसत्रवत्। तद्यथा वार्षशतिकानि, वार्षसहस्रिकाणि च सत्राणि न कश्चिद् अप्य् अद्यत्व आहर्तुं शक्त इति जानन्तोऽपि लक्षणकारास् तेषां लक्षणाद् न विरमन्ति। किन्तु कुर्वन्त्य् एव। उक्तम् इदं वार्तिककारेण— 'अप्रयुक्ते दीर्घसत्रवत्' इति। किञ्च, वस्तुतः शब्दस्याऽप्रयोगोऽपि न दृढ-मूलः। महान् खलु शब्दस्य प्रयोग-विषयो यद् वेद-वेदाङ्ग-वाकोवाक्येतिहास-पुराण-वैद्यकादीनि। अथ च देश-भेदाद् अपि शब्दस्य प्रयोगोऽवतिष्ठते। तथाहि—'शवतिर् गति-कर्मा कम्बोजेष्व् एव भाष्यते। विकार एनम् आर्या भाषन्ते। दातिर् लवनार्थे प्राच्येषु, दात्रम् उदीच्येषु' इत्यादि। तद् इदम् उच्यते वार्तिक-कृता— 'सर्वे देशान्तरे' इति। एतावता वार्तिक-कारस्य ग्रन्थाऽन्तरेषु देशाऽन्तरेषु च परीक्ष्यमाणेषु सर्वेषाम् एव शब्दानां प्रयोग-दर्शनात् सर्व एव प्रयुक्ताः शब्दा नित्याः, तदर्थस् तत्-सम्बन्धोऽपि नित्यः, तेषु च नित्येषु शब्देष्व् अर्थ-कारणात् प्रयुज्यमानेषु शास्त्रेण व्याकरण-स्मृति-विषयतया सुशब्दान् ज्ञात्वा तत्प्रयोगे प्रयोक्तुर् अभ्युदयो बोध्यत इति मतम्। तथा च वार्तिकम्— 'सिद्धे शब्दार्थ-सम्बन्धे; लोकतोऽर्थ-प्रयुक्ते शब्द-प्रयोगे शास्त्रेण धर्म-नियमः' इति। न केवलं शब्द-ज्ञाने धर्मः, किन्तु ज्ञात्वा प्रयोग एव। ज्ञाने धर्मश् चेद् अपशब्द-ज्ञाने तुल्यम् अधर्मस्याऽपि सम्भवात्। प्रत्युत शब्दाऽपेक्षया भूयस्त्वाद् अपशब्दानां तज्-ज्ञाने बाहुल्यम् अधर्माणां स्यात्। वस्तुतस् तु शब्द-ज्ञानेऽपशब्द-ज्ञान-सम्भवस्याऽपरिहरणीयतया नैव दोषः। सन्न् अपि वा दोषः कूपखानक-न्यायेन शुद्धो भविष्यति। तद्यथा—कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश् चाऽवकीर्णो भवति। सोऽप्सु सञ्जातासु तत एव तं गुणम् आसादयति येन च स दोषो निर्हण्यते, भूयसा चाऽभ्युदयेन योगो भवति। एवम् इहाऽपि यद्यप्य् अपशब्द-ज्ञानेऽधर्मस् तथाऽपि यस् त्व् असौ शब्द-ज्ञाने

धर्मस् तेन च स दोषो निर्वानिष्यते। 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति'इति स्मृतिर् अपि शास्त्र-पूर्वके शब्द-प्रयोगे पूर्वोक्तं प्रयोक्तुर् अभ्युदयम् एव प्रशंसति। अत्र स्मृतौ 'सम्यग्ज्ञात' इति ज्ञानस्य, 'सुप्रयुक्त' इति प्रयोगस्य च सङ्ग्रहः। वार्तिककारोऽप्य् आह— 'शास्त्र-पूर्वके प्रयोगेऽभ्युदयस् तत्तुल्यं वेद-शब्देन' इति। तत्तुल्यम् इत्यादेर् नियम-पूर्वम् अधीता वेद-शब्दा यथा फलवन्तस् तथा शास्त्र-पूर्वकं प्रयुक्तोऽपि शब्दोऽभ्युदय-कारित्वात् फलवान् इत्यर्थः। साधितम् एतावता व्याकरणं सप्रयोजनम् इति।

**शास्त्र-प्रणयन-रीतिः—**

सम्प्रति व्याकरणं शब्द-व्युत्पत्तयेऽवश्यम् अखिलैर् उपगन्तव्यं कया रीत्या क्रियमाणम् आचार्येण व्युत्पित्समानानाम् अनुकूलं स्याद् इति चिन्त्यते। किं शब्दोपदेशः कर्तव्यः, आहोस्विद् अपशब्दोपदेशः, उताहो उभयोपदेशः। व्यर्थं उभयोपदेशः। भक्ष्य-नियमेनाऽभक्ष्य-प्रतिषेधवद् अभक्ष्य-प्रतिषेधेन भक्ष्य-नियमवद् वा नूनम् एकतरोपदेशेनैव कृतं स्यात् शब्दोपदेशेन वाऽपशब्दोपदेशेन वा। तथाहि— 'पञ्च पञ्चनखा भक्ष्या' इत्य् उक्ते गम्यत एवैतद् अतोऽन्येऽभक्ष्या इति। एवं 'गौर् अश्व इत्यादयः शब्दा' इत्य् उपदिष्टे ज्ञायत एवैतद् अतोऽन्ये गाव्यस्वादयोऽपशब्दा इति। तथैव 'अभक्ष्यो ग्राम्यकुक्कुट' इत्य् अभिहिते व्यज्यत एवेदम् आरण्यो भक्ष्य इति। इत्थं गाव्यस्वादयोऽपशब्दा इति कथिते बुध्यत एव दृढं गौर् अश्व इत्यादयः शब्दा इति। अथाऽनेनाऽपशब्देन शब्देन फलं समानम् इति प्राप्ते तयोर् अपि मध्ये कतरोपदेशो ज्यायान् इति निर्धारणीयम्। तत्र लघुत्वाद् इष्टाऽन्वाख्यानाऽनुगुणत्वाद् अपि च शब्दोपदेश एव वरम्। लघीयान् शब्दोपदेशो गरीयान् अपशब्दोपदेशः। एकस्य शब्दस्य गावी-गोणी-गोता-गोपोतलिकेत्यादयोऽपरिमेया अपशब्दाः। इष्टाऽन्वाख्यानम् इत्य् अस्य च इष्टानां शब्दानां साक्षाद् ज्ञातव्यत्वेनाऽभिलषितानाम् अन्वाख्यानं स्थितानाम् अनुवचनम् इत्यर्थः। शब्दोपदेशे च कामम् इष्टाऽन्वाख्यानं भवतीति शब्दोपदेश एव ज्यायान् इति सिद्धम्। अनेन प्रकारेण प्राप्ते शब्दोपदेशे ज्यायसि, शब्दानां प्रतिपत्तौ किम् इष्टानां शब्दानां गौर् अश्वः पुरुषो हस्ती शकुनिर् मृगो ब्राह्मण इत्यादि-रूपेण प्रतिपद-पाठः कर्तव्यः, किं वोपायान्तरम् अस्तीति विमृशामः। प्रतिपद-पाठः शक्येतरत्वाद् उपेक्ष्यः। सर्वथा हि चिरञ्जीविनः शतायुषोऽपि पुरुषस्य कृत्स्नम् आयुर् एवम् उपदिष्ट-शब्दा-

ऽध्ययनेनैव पर्युपयुक्तं स्यात्। बहुभिश् च प्रकारैः स्वाध्याय-प्रवचन-व्यवहारादिभिर् अन्यैश् च मनुष्येणोपास्या विद्या। तस्माद् अन्य एवाऽभ्युपायो द्रष्टव्यो येनाऽल्पेन यत्नेन महतो महतः शब्दौघान् सर्वे प्रतिपद्येरन्। स च सामान्य-विशेषवल्-लक्षण-प्रवर्तनम् एव। सामान्येनोत्सर्गं विशेषेणाऽपवादं च विधिम् आश्रित्य लक्षणं (शास्त्रं) प्रवर्त्यम् इत्यर्थः। तद्यथा 'कर्मण्यण्' इति सामान्येनोत्सर्ग-विधिः, 'आतोऽनुपसर्गे कः' इति विशेषेणाऽपवादविधिश् च। किंच यथा स्वरूपे सामान्य-विशेषाभ्यां लक्षणं प्रवृत्तम्' तथा पदार्थेऽपि जातौ व्यक्ताव् अपि तत्र तत्र यथायथं लक्षणं प्रवर्तनीयम्। उभयथा ह्य् आचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा 'जात्याख्यायाम् एकस्मिन् बहुवचनम् अन्यतरस्याम्' इति, द्रव्यं पदार्थं मत्वा 'सरूपाणाम् एकशेष एकविभक्तौ' इति च। तस्मात् सुस्थितम् एव यथावद् आचार्यस्य भगवतः पाणिनेर् लक्षणं सामान्य-विशेषवत् प्रवृत्तं साधीयान् उपायः शब्दानां प्रतिपत्तौ।

## वर्णोपदेश-प्रयोजनम्—

एवं शास्त्रस्य विषय-प्रयोजनयोर् निरूपितयोः सामान्य-विशेषवल्-लक्षण-प्रवर्तने च प्राप्ते तदारम्भणम् एव कर्तव्यम्। लोक-प्रसिद्धैः शब्दैर् अर्थैश् च कृत्स्नोऽपि शास्त्रीयो व्यवहारो दुष्कर इति कृत्वा लाघवाय संज्ञा-परिभाषस्य निरूपणम् अपेक्ष्यते। 'अ इ उ ण्' आदि-वर्णोपदेशस् तु न कस्याऽपि लक्षणस्य स्वरूपं भवति। नाऽपि तत्र कश्चिद् अपि वाक्याऽर्थः प्रथते। वर्ण-स्वरूप-विज्ञानं तु प्रसिद्ध-मातृका-पाठेनाऽपि सुकरम् इति पर्यालोच्य भाष्यकारः प्रयोजन-मुखेन वर्णोपदेशस्य शास्त्राऽङ्गत्वं विवर्णयिषुर् अनन्तराऽऽह्निक-पूर्वपीठिका-स्थाने पस्पशा-पुच्छ-भूतं तत्प्रयोजन-कथनं पूर्वोत्तराह्निकयोः परस्पर-संयोजकम् अत्रैव प्रतिपाद्य शेषं पश्चाद् उपन्यस्यति।

साधु-शब्दानुशासन-परेऽस्मिन् व्याकरणे न हि वर्णोपदेशेन कश्चिद् अपि साधु-शब्दोऽनुशिष्यत इति किमर्थो वर्णानाम् उपदेश इति शङ्का भवति। वर्ण-ज्ञानस्य लोक-प्रसिद्ध-मातृका-पाठेनैव सम्भवाद् माहेश्वरो वर्ण-समाम्नायः किंफलक इत्य् अपि शङ्काऽन्तरं तुल्य-समाधानम्। विचार्यमाणे कार्ये वृत्ति-समवायाऽर्थोऽनुबन्ध-करणार्थश् चेष्ट-बुध्यर्थश् च वर्णोपदेशः कर्तव्य इति प्रयोजनानि त्रीणि तदुपदेशस्य। वृत्ति-समवाय इत्य् अस्य 'वृत्तये वृत्त्यर्थः वृत्ति-प्रयोजनको वा समवाय' इति विग्रहः। वृत्तिः शास्त्र-प्रवृत्तिः। समवायो

वर्णानाम् आनुपूर्व्येण सन्निवेशः । लाघवेन शास्त्रं प्रणिनीषमाणस्याऽऽचार्यस्याऽवश्यं तद्-उपयोगी वर्णोपदेशः प्रार्थनीयः । वर्ण-सन्निवेश-मात्रेणैव 'इग्यण' इत्यादिषु यथासंख्य-शास्त्र-प्रवृत्तिर् व्यवतिष्ठेत । वर्णानाम् उपदेशे सतीत्संज्ञा, तत 'आदिरन्त्येने'ति प्रत्याहारः, परम् 'अकः सवर्णादि'-शास्त्र-प्रवृत्तिर् इति परम्परया लक्षण-प्रवृत्त्यङ्गं सन् वर्णोपदेशः फलवान् इति निर्बाधं प्रथमं प्रयोजनम् । अनुबन्ध-करणार्थश् च वर्णानाम् उपदेशः कार्यः । नह्य् अनुपदिश्य वर्णान् अनुबन्धाः शक्या आसङ्क्तुम् । वर्णानाम् आनुपूर्व्येण सन्निवेशोऽनुबन्ध-करणं च द्वयम् इदं प्रत्याहाराऽर्थम् प्रत्याहारश् च शास्त्र-प्रवृत्त्यर्थ इति विवेकः । शास्त्रस्य साक्षात् प्रवृत्ति-प्रयोजके प्रत्याहारे साधकीभूय वर्ण-सन्निवेशोऽनुबन्ध-करणं च तद्-द्वारा शास्त्र-प्रवृत्तिं निर्वहत इति फलितम् । प्रत्याहारम् अपुरस्कृत्य वर्ण-सन्निवेशात्मकस्य समवायस्य वृत्ति( शास्त्र-प्रवृत्ति )-फलकत्वाऽसम्भवेनाऽनुबन्ध-करणार्थश् चेति द्वितीयं प्रयोजनं परमार्थतः प्रथमस्यैव प्रपञ्चः प्रतिभाति । इष्ट-बुध्यर्थश् च वर्णोपदेशः सार्थः । इष्टान् वर्णान् बोधयामहे इति । न ह्य् अनुपदिश्य वर्णान् इष्टा वर्णाः शक्या ज्ञापयितुम् । सत्य् एवोपदेशे वक्ष्यमाण-कलाऽऽदि-दोष-शून्यतया शुद्धा वर्णाः सुबोधाः । वैयाकरणानां तद्-बोधार्थं मातृका-पाठो विशिष्य नाऽपेक्ष्यत इति तात्पर्यम् । अत्रैवं पर्यनुयुञ्जते केचित्—यावतेष्ट-वर्ण-बोधनायोपदेशस् तावतोदात्ताऽनुदात्त-स्वरिताऽनुनासिक-दीर्घ-प्लुतानाम् अपि इष्टतयोपदेशः कर्तव्य इति । अत्र ह्रस्वस्येष्टत्वेऽपि पृथग् असंग्रहस् तु ह्रस्ववताम् अस्त्य् एवोपदेश इति विचारेण । सूत्राणाम् एक-श्रुत्या पाठात् त्रयोऽप्य् उदात्तादयः स्वराः प्रत्येकं गृहीताः । तत्रेत्थं समाधिः—आकृत्युपदेशाद् एव तेषाम् अपि सिद्धिर् भविष्यति । अवर्णाऽऽकृतिर् उपदिष्टा सर्वम् अवर्ण-कुलं गृहीष्यति । तथेवर्णाऽऽकृतिस् तथोवर्णाऽऽकृतिः । विषमम् इदम् आपतितम् यद् इष्टान् उदात्तादीन् संग्रहीतुम् उपेतेनाऽऽकृत्युपदेशेनाऽविशेषाद् अनिष्टा दुष्टाश् च संवृत-कल-ध्मातादयोऽप्य् अन्तर् भाव्येरन् । तदर्थम् आकृत्युपदेशे तेषां प्रतिषेधोऽप्य् आरम्भणीयः । तद् आह वार्तिककारः— 'आकृत्युपदेशात् सिद्धम् इति चेत् संवृतादीनां प्रतिषेधः' इति । अत्र संवृतत्वं यद्यप्य् अकारांऽशे न दोषः प्रत्युत गुण एव । तथाऽपि सन्ध्यक्षरेषु स दोष एवेत्य् अभिप्रायः । यथार्थतस् तु विचारणायां नाऽयं दोषः । यद् आचार्यः पाणिनिर् गर्गादीन् बिदादींश् च शब्दान् स्वरूपेण सन्निवेशयन् गणे परिगणयति, तेन कलादि-दोषाऽदूषित-तत्-पाठत एव समुदायानां गर्ग-बिदादीनां साधुत्वं कलादि-दोष-निवृत्तिश् च सम्पाद-

यितुं शक्येते । कथं पुनर् एकेन यत्नेनोभयं लभ्यम् इति चोद्यं लघु-समाधेयम् । द्विगता अपि हेतवो भवन्ति । तद्यथा— 'आम्राश् च सिक्ताः पितरश् च प्रीणिता' इति । तथैव वाक्यान्य् अपि द्विष्ठानि भवन्ति— 'श्वेतो धावति, अलम्बुसानां याते'ति । एतद् एव कथ्यते वार्तिकेन—'गर्गादि-बिदादि-पाठात् संवृतादीनां निवृत्तिर्' इति । संवृतादीनां पाठाद् एव निवृत्ताव् इष्ट-बुद्धिर् अपि नान्तरीयकतया सिद्धेति तृतीयं प्रयोजनं वर्णोपदेशस्याऽन्यथा-सिद्धं भासते । शास्त्राऽन्ते 'अ अ' इतिवत् 'इ इ', 'उ उ' इत्यादि-रूपेण शुद्धानां प्रत्यापत्तिम् अङ्गीकृत्य कलाद् आत्मनेपदं, धमातात् कर्तृ-गामिनि क्रिया-फले इत्यादि-क्रमेण तैर् एव कलादिभिर् अनुबन्धैः क्रियमाणं कार्यं निरुह्य पूर्वेषाम् अनुबन्धानां गल-हस्तिका-दानेन लाघव-सम्पादनाय प्रयत्नस् तु पाणिनीय-मार्ग-भ्रष्टो न सिद्धान्त-पङ्क्ति-प्रवेशाऽर्हः । अनुनासिकादीनाम् एव कलादीनाम् अपि प्रतिज्ञा-मात्र-ग्राह्यत्वेन दुर्ग्रहतया ललित-मतीनां शिष्याणाम् उद्वेग-जननात् । आचार्यः किल सूत्रकारो भगवान् अनन्य-सुगमेन स्पृहणीयेन स्वमति-कौशलेन द्यूतकारवद् देवनाऽक्षान् विचित्रेषु लिखित-प्रतिरूपकेषु घट्टकेष्व् इवाऽऽगमाऽऽदेश-प्रत्यय-प्रमुखेष्व् अनुबन्धान् आसज्य बालान् उपलालयन् स्वभाव-कठिनम् अपि शास्त्रं व्याकरणं शर्करो-पलिप्त-मुखम् इव कटुकौषधं पाययतीत्य् अहो मधुर-सुकुमारेयं सरणिर् अखिलोपास्या । अथवा सुवर्णकारेणेव वैयाकरणेन कपालोदर-तुषानिल-मुषास्थानीयेषु प्रक्रिया-यन्त्रेषु प्रवेश्य धातु-प्रातिपदिक-प्रत्ययाऽऽदेशाऽऽगमा-ऽऽत्मकान् शब्द-खण्डान् शोधयित्वा यथा-स्थानं सुघटयित्वा निर्मली-क्रियमाणे स्वरूपे नास्त्य् एव कलादि-दोषाणां लेशतोऽपि प्रसङ्गाऽवकाशः । इदम् एवोक्तम् अन्ततो भाष्यकारेण—

> 'आगमाश् च विकाराश् च प्रत्ययाः सह धातुभिः ।
> उच्चार्यन्ते ततस् तेषु नेमे प्राप्ताः कलादयः ॥' इति ।

**कलादीन् प्रति नवीन-सिद्धान्तः—**

आधुनिक-भाषा-पण्डिताः पुनर् एषां दोष-कोटौ प्रवेशम् एव नाऽनु-जानन्तीति प्रकटम् इदम् अभ्यूहना-चतुराणाम् । तथाहि—गुण-दोषौ व्यवस्थिताऽन्योन्य-स्वभावाऽवधि-सापेक्षाव् इति स्थिते तत्त्व-पर्यालोचनायां न दोषो नाऽपि गुणः कश्चिद् अपि । आकाङ्क्षणीयो गुणस् तदन्यो दोष इत्य् एव वस्तुतः फलति । लक्षणेऽस्मिंस् तत्-तद्-देशभेदाऽनुरूपैः शीतोष्णा-

( शिष्टं पृ. १३५ द्र. )

# मथुराकलायां एकानंशा प्रतिमा

नीलकण्ठपुरुषोत्तमजोशी*

ख्रीस्त-संवत्सरस्य प्रथम-शतकाद् एव मथुरा-कलायां ब्राह्मण-धर्मीयानां देव-प्रतिमानां निर्माणस्याऽऽरम्भो जातः। तदानीन्तनैः तक्षकैः शिव-स्कन्द-कुबेर-विष्णु-सूर्यादीनां बहु-देवतानां विग्रहाणां तक्षणं व्यधायि। तेषां मध्यात् केषाञ्चित् पूजनम् अद्यावधि प्रचलितम् अस्ति। वसुधारा-नेगमेशादीनाम् केषाञ्चिद् विस्मृतम्। एकानंशाया अपि पूजनम् अधुना न दृश्यते, परं कुषाण-काले प्रचलितम् आसीत्, तद् अपि मथुरा-क्षेत्रे। एकानंशाया आख्यानं महाभारते हरिवंशे च निगदितम् अस्ति।

नन्द-पत्न्या यशोदाया गर्भ-समुत्पन्ना भगवतो विष्णोर् योग-माया एकानंशेति नाम्ना प्रसिद्धिम् अगात्। विष्णुना सहैकत्वाद् अनंशा, अत एकानंशा इत्य् अस्य शब्दस्य व्युत्पत्तिर् हरिवंशे कृता विद्यते[1]। पुत्रवत् पाल्यमाना वृष्णि-संघ-सम्पूजिता सेयं कृष्ण-बलभद्रस्य भगिनी लोके बहु-मान्यताम् अवाप[2]। शैशवे कंस-हस्ताद् विमुक्ता सा तस्य दुष्टस्य दृष्टि-पथे दिव्येन चतुर्भुज-रूपेणाऽवततार। अत एव इयम् एकानंशा दुर्गा-रूपेणाऽपि मान्या बभूव। आर्या, ब्रह्मचारिणी, विन्ध्य-वासिनी, भद्र-काली, सुरा, सहस्र-नयना, किराती, निद्रा इत्यादीनि तस्या नामधेयानि। विभिन्नानां नाम्नाम् अध्ययने कृते सति एकानंशाया विविधानां गुणानां रूपस्य च दर्शनं भवति। इयं कृष्ण-स्वसा 'विन्ध्यवासिनी'ति नाम्ना शबर-पुलिन्दा-दीनां रक्त-मांस-भोजिनीनां दस्यु-कर्म-प्रसक्तानां वन्य-जातीनाम् आराध्यत्वम् अवाप।

अस्या देव्या द्वे रूपे। तयोर् एकानंशा-रूपं तावत् सौम्यतरम्, इतरत् पुनर् दुर्गारूपम् अतीव भयंकरम् अवलोक्यते। अत्र सौम्य-रूपस्यैव चर्चा विधीयते। कृष्ण-बलभद्रयोर् मध्ये स्थिताया एकानंशाया रम्यतमं वर्णनं महर्षिणा वेद-व्यासेन महाभारते कृतम् अस्ति।[3] तत्रैव च

---

*एम. ए., पी-एच. डी.; पुरातत्त्व-संग्रहालयः; मथुरा।

---

१. हरिवंशपुराणम्, (गीता प्रेस गोरखपुर) ४,४७। २. तत्रैव ४,४६।

३. महाभारतम्, (गोरखपुर) सभा०, अध्याय ३८।

दक्षिणदेशीयः पाठभेदः पृ. ८२०-२१।

तस्या विषये व्यासस्येयम् उक्तिः—

ततः प्रातः यशोदाया दुहिता वै वृष्णेन हि ।
जाज्वल्यमाना वपुषा प्रभयाऽतीव भारत ॥
एकानंशेति यामाहुः कन्यं तां कामरूपिणीम् ।
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ॥
ततः स भगवान् रामः तामुपाक्रम्य भामिनीम् ।
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ॥
दक्षिणेन कराऽग्रेण परिजग्राह माधवः ।
ददृशुस्तां सभा-मध्ये भगिनीं रामकृष्णयोः ।
रुक्म-पद्म-शयां पद्मां श्रीमिवोत्तम-नागयोः ॥
अथाक्षत-महावृष्ट्या लाज-पुष्प-घृतैरपि ।
वृष्णयोऽवाकिरन् प्रीताः संकर्षण-जनार्दनौ ॥

बृहत्संहितायाम् अप्य् एकानंशाया वर्णनं परिलक्ष्यते[१] । परं तत्र सा वामे करे सरोजं धृतवती वर्णिता । व्यासेन तु सरोजस्याऽयम् उल्लेखो न विहितः । बृहत्संहिताऽऽख्यो ग्रन्थस् तु गुप्तकालीनः, परं ततः पूर्वम् एव कुषाण-काले एकानंशायाः प्रतिमा-निर्माणं जातम् आसीद् इति महाभारतात् प्रतीमः । इदानीं यावन् नानुविहितम् आसीद् एतद्-विषयकम् अनुशीलनं विद्वद्भिः । प्रथमतो बुधवरेण अग्रवालोपनाम्ना रत्नचन्द्रेण स्वकीये निबन्धे[२] कराची-संग्रहालय-स्थिताया अस्याः कुषाण-कालीनाया मूर्तेः परिचयः प्रदत्तः । परं छाया-चित्राऽभावात् तद् अपूर्णम् एवाऽऽसीत् । यदा मया स्वस्य संग्रहालयस्याऽऽलोचनं कृतं तदा तत्र एकानंशायाः विग्रह-त्रयम् अवलोकितम् । तेषु द्वौ कुषाण-कालीनौ, एकश् च मध्यकालीनः । परं ते सर्वे खण्डिताः सन्ति । नाऽतिचिरेण मथुरा-नगरस्थस्य पण्डित-गोविन्द-चरणस्य संग्रहे एका निम्न-भाग-जीर्णा प्रतिमा सम्प्राप्ता ( चित्रं संलग्नं द्र.) । तत्र तिसृणाम् अपि देवतानां विग्रहा अवलोकयितुं शक्यन्ते । अस्याः साहाय्येन पूर्ववर्तिनीनां खण्डितानां प्रतिमानां निश्चयो दृढिमानम् आसादयति । इदानीं निश्चयेन प्रतिपादयितुं शक्यते यद् व्रज-क्षेत्रे एकानंशायाः स्थितिः कुषाण-कालेऽप्य् आसीद् इति ।

---

१. बृहत्संहिता, ५७,३७ ।

२. R. C. Agrawal, Krishna and Baladeva as attendants. Figures in Early Indian Sculpture, *India Historcal Quarterly*, March 1962, PP 86-87

अत्र प्राचीनतमानां कुषाण-कालीनानां प्रतिमानां संक्षेपतः परिचयः प्रदीयते—

(१) पण्डित-गोविन्द-चरणस्य प्रतिमा ( चित्रस्था मूर्तिः )—



अस्मिन् शिला-पट्टे तिस्रो मूर्तयो दृश्यन्ते। मध्ये अभय-मुद्रां प्रदर्शयन्ती उत्थित-दक्षिण-करैका स्त्रियो मूर्तिर् विद्यते। तस्या दक्षिणे पार्श्वे एका पुरुषस्य मूर्तिः। पुरुषस्योत्थितो दक्षिण-करोऽभयमुद्रायां विद्यते, वामकरस् तु कटि-संस्थित एव। दक्षिणोर्ध्व-करे स ऊर्ध्व-कुम्भां गदां धारयति। वामे ऊर्ध्व-करे सिंह-शोभितं लाङ्गलम्। एतेन व्यक्तम् इयं बलरामस्य प्रतिमेति सिध्यति। देव्या वाम-पार्श्वे गदा-चक्र-धरश् चतुर्भुजः पुरुषो लक्ष्यते। सोऽयं वासुदेवः। अथ च बलभद्र-वासुदेवयोर् मध्ये या स्त्री-मूर्तिः सा एकानंशा। यद्यपि शिला-पट्टस्य निम्न-भागा जीर्णाः सन्ति तथाऽपि तिसृणां प्रतिमानां निश्चय-करणे काऽपि बाधा नास्ति।

(२) मथुरा-संग्रहालयस्य यू० ४५ संख्यकः शिला-पट्टः—

अत्र केवलं बलभद्रस्यैकानंशायाश् च दर्शनं भवति। वासुदेवांशः खण्डितः।

(३) मथुरा-संग्रहालयस्य १५-९१२ संख्यकः शिला-खण्डः—

अत्र स-स्वसारो वासुदेवोऽवलोकयितुं शक्यते । बलदेवस्य तु प्रतिमा खण्डिता ।

(४) मथुरा-संग्रहालयस्य यू० ९८ संख्यकः शिला-खण्डः—

मध्यकालीनेयं कला-कृतिः। अत्र चतुर्भुजः बलभद्रः स्थास्यति । पार्श्व-स्थिताया एकानंशायाः कमल-पुष्प-धारी वाम-हस्तो द्रष्टुं शक्यते । शेषांशः खण्डितः ।

उत्तरप्रदेशे एकानंशायाः एका मूर्तिर् लखनऊ-संग्रहालये विद्यते ।[१] सा खिस्ताब्दस्य दशम-शतके विनिर्मिता भाति । अन्या प्रतिमा वाराणस्यां लक्ष्मीकुण्ड-निकटस्थस्यैकस्य प्रस्तर-शिखरस्योपरि उत्कीर्णा दृश्यते । इयं कला-कृतिर् अष्टमे नवमे वा शतके निर्मिताऽस्तीत्य् अनुमीयते ।[२]

१. लखनऊ-संग्रहालयस्य जी. ५८ संख्यका मूर्तिः ।

२. नीलकण्ठ-पुरुषोत्तम-जोशी : लक्ष्मीकुण्ड के आस पास की प्राचीन-कलाकृतियां, 'आज', वाराणसी २२ सितम्बर १९५७ ।

( १३० पृष्ठस्य शेषः )

व्यवस्था-विशेषैः प्रकृति-वशाद् आचार-हेतोर् अपरिशीलन-निमित्ताच् च प्रयत्नतः कण्ठादेर् विषम-स्वभावात् स्थानाद् अभिव्यज्यमानो वर्ण-पद-वाक्याऽऽत्मा ध्वनिर् अखिलोऽपि सर्वेषाम् अपि दृष्ट्या यत्किञ्चिद् विकार-रूप एव भवितुम् अर्हति । तस्मात् प्राच्यैः प्रतीच्याऽभिमतोऽवाच्यैर् उदीच्याऽभिमतश् च स्व-स्वाऽभिलषित-परिचयाद् अन्यतया स सदोष-त्वेन गण्यते । गुणतया च तद्-विपरीतः । द्वैप्यभाषा-विदस् तु यावत्सम्भ-वम् अपरिमेयान् ध्वनि-विकारान् अभ्युपयन्तस् तेषां समेषां चाऽदुष्टताम् एव वदन्तीत्य् अहो तदीया निर्मत्सरता निखिलाऽभिनन्दनाऽर्हा । अकारा-दीनां च कण्ठादि-स्थानकतया शिक्षादिषु शिक्षणं च प्रायः पाणिनीय-प्रक्रिया-रक्षणाऽर्थम् एवोपकरोति । तालव्यम् अकारं 'A' इति तथोष्ठ्यं तं 'G' इति चाऽनुभव-कवाटम् अमुद्रयित्वैव ते प्रत्यक्षयन्ति । •एवम् एव दन्तोद्भवत्वेन तवर्गस्येव वर्त्स्य-प्रभवतया टवर्गस्याऽप्य् अभिव्यक्ति-कथनं तदीय-वाक्य-विरुद्धम् एव नः प्रतिभाति । किम् अनया प्रसक्ताऽनु-प्रसक्त्या । दोषाश् चेद् गर्गादि-बिदादि-पाठेन ते नितरां निबुसीकृताः शुद्धा जाताः। यद् इदं वृत्ति-समवायार्थोऽनुबन्धकरणाऽर्थं इष्ट-बुध्यर्थश् च वर्णानाम् उपदेश इत्य् उक्तं तदेवेदं द्वितीयाऽह्निकाऽन्ते चोपसंह्रियते 'तदर्थम् इष्ट-बुध्यर्थं लघ्वर्थं चोपदिश्यत' इति वार्तिकेनापीति सर्वम् अविकलं विमलम् ।

# कविकुलगुरुः कालिदासः

जनार्दनगङ्गाधररटाटे*

यः साहित्यमहोदधिं गुणमयालङ्कारमुक्तायुतं
युक्त्यास्वाद्यलसद्रसं स्वजठरे पीतं कदाचित् क्वचित् ।
प्रादुर्भावयति स्म काव्यरचनाद्वारा बुधैः संस्तुतः
सोऽयं सत्कविराजचक्रमहितः कोऽप्यस्ति कुम्भात्मजः॥
श्रीमद्विक्रममुर्वशीञ्च तिलकं श्यामालकालिं पुनः
प्रोच्चैर्मालविकाग्निमित्रचरितक्षीरौ स्तनौ बिभ्रतीम् ।
यः शाकुन्तलचन्द्रकान्तवदनामानन्दयन्तीं जनान्
कीर्तिं गीतगुणामुवाह स कविर्धन्योऽस्तु मान्यो महान् ॥
हेमाभां सुकुमारसम्भवपदां गौरीमिवान्यां स्थितां
भास्वच्छ्रीरघुवंशमञ्जुलतमां शाटीं वहन्तीं हिताम् ।
नानापल्लवकङ्कणं स ऋतुसंहारं दधानां करे
कीर्तिं गीतगुणामुवाह स कविर्धन्योऽस्तु मान्यो महान् ॥

कालिदास! कवितावनितायाः
कान्त! हन्त तव गौरवगाने ।
वाग्विलाससरसीकृतलोक!
कः समर्थ इति किं कथनीयम् ?

शारदीय! शरदिन्दुसमाना
सेविताऽपि बहुधा रसलुब्धैः ।
नूतनैव नवनीतसमाङ्गी
वन्द्यतेऽद्य सकलैस्तव कीर्तिः ॥

---

* बी. ए. साहित्याचार्यः; वाराणसी ।

# न्यायस्य प्रामाण्यवादः

केदारनाथ ओझाः*

पादस्य शास्त्रे निहितस्य प्राचः संदर्शनायोत्कटनेत्रकाचाः ।
नानानतां शत्रुभिये दधाना नित्यं जयन्ति श्रुततर्कवाचः ॥१॥

सिद्धान्तः—

उत्पत्तौ ज्ञप्तौ च स्वतस्त्व-परतस्त्वे निरुच्येते, दोषाद् भ्रमो गुणाच् च प्रमेति सर्वत्रोत्पत्तौ परतस्त्वम्, सामान्य-ज्ञान-सामग्र्या यदा दोषः प्रविशति तदा भ्रमः, यदा च गुणस्य प्रवेशस् तदा प्रमा, एवं भ्रमत्व-प्रयोजको दोषः, प्रमात्व-प्रयोजकश् च गुण इति भावः ।

इत्थम् अत्राऽवधेयम्—दण्ड-चक्र-कुलालाऽऽदि-घटित-सामग्र्या यत्र घटः कार्यं तत्र घटे नैकविधा कार्यता । घटत्वेन पृथिवीत्वेन द्रव्यत्वेन कार्यत्वेन चाऽवच्छिन्ना, घटवृत्तिर् घटत्व-पृथिवीत्व-द्रव्यत्वादीनां च प्रयोजिका नाना सामग्र्यश् च तत्र, विशेषम् अन्तरा सामान्यं कार्यं दर्शयितुं न शक्यते, तथा विशेष-सामग्रीतः पृथक् सामान्य-सामग्र्य् अपि, एवम् एव ज्ञानेषु ज्ञानत्वं सामान्यं भ्रमत्व-प्रमात्वे च विशेषौ, तत्र ज्ञानत्व-प्रयोजिका सामान्य-सामग्री यत्र ज्ञानमात्रं प्रति कारणानि सन्निविष्टानि, दोष-गुणान्यतर-घटिता च सैव ज्ञान-सामग्री विशेष-सामग्री भवति, भ्रमत्वं प्रमात्वं वा प्रयोजयति, यथा यदैव घटस् तदैव पृथिवी द्रव्यं च, तथा समुत्पद्यमानम् एव ज्ञानं भ्रमः प्रमा वा जायते, न तु ज्ञानत्वेन समुत्पद्य दोषेण गुणेन वा सह युक्त्वा भ्रमत्वं प्रमात्वं वाऽर्जयति ।

इत्थं च भ्रमत्वं दोष-घटित-सामान्य-ज्ञान-सामग्रीतः, प्रमात्वं च गुण-घटित-ज्ञान-सामग्रीतः समुत्पद्यते न तु ज्ञान-सामान्य-सामग्रीत एव, अन्यथा ज्ञान-मात्रं भ्रमः प्रमा च स्याद् इति सर्वत्रैकान्तेनोत्पत्तौ परतस्त्ववादः ।

ग्रन्थेषु भ्रमत्वम् अप्रामाण्यम् इत्य् उच्यते, प्रमात्वं च प्रामाण्य-पदेन कथ्यते ।

---

*न्याय-वेदान्त-व्याकरणाचार्यः; प्राध्यापकः, पटना-राजकीय-संस्कृत-महाविद्यालयः; पटना ।

**ज्ञप्तौ परतस्त्व-वादः—**

पूर्व-वर्णित-सामग्रीभ्यां जायमानं जानामीत्यादि-प्रकारेणाऽनुभूयमानं व्यवसीयमानं ज्ञायमानं वा ज्ञानं भ्रमः प्रमा वेति न ज्ञायते, ज्ञाने ज्ञातेऽपि तद्-गतं भ्रमत्वं प्रमात्वं वा न ज्ञायते। ज्ञान-विषयकं ज्ञानं नियमेन प्रामाण्य-विषयकं न भवति, तज्ज्ञान-निष्ठं प्रामाण्याप्रामाण्याऽन्यतर-विषयकत्वं तज्ज्ञान-विषयक-ज्ञानत्वं व्यभिचरति वा, किन्तु स्व-सामग्रीत एव ज्ञानं विषय-प्रकाशकं निश्चय-स्वरूपं च सद् व्यवहारं प्रवर्तयच् च ज्ञानान्तरेण विसंवादं प्रवृत्तौ विघातम् असफलताम् असमर्थतां वा लभते तदाऽनुमीयते ज्ञानम् इदं भ्रम इति भ्रमत्वेन। अर्थात् ज्ञानत्वेन ज्ञान-ग्राहिका सामग्र्य् एव न भ्रमत्व-ज्ञानं जनयति, अन्यथा ज्ञातं ज्ञानं भ्रमत्वेनाऽपि ज्ञायेत, किन्तु पूर्वोक्त-विसंवादाऽऽदिकारण-घटिता यदा ज्ञान-ग्राहक-सामग्री भवति तदैव भ्रमत्व-ज्ञानम् अर्जयति, तथा च तज्-ज्ञान-निष्ठं भ्रमत्वं तज्ज्ञान-प्रामाण्यस्याऽग्राहिका तज्ज्ञानस्य ग्राहिका या सामग्री तया ग्राह्यम् एव न भवतीत्य् अप्रामाण्यस्य परतो ग्राह्यत्वम्।

एवम् एव ज्ञाने ज्ञाते तद्-गतं प्रमात्वम् अपि न ज्ञायत एव, किन्तु स्वयम् एवाऽर्थ-निश्चय-रूपं ज्ञानं व्यवहारं प्रवर्तयत् सत् संवादेन सफल-प्रवृत्ति-जनकत्व-ज्ञानाऽऽदिना वा प्रमात्वेनाऽनुमीयते। तज्ज्ञानाऽप्रामाण्य-स्याऽग्राहिका तज्ज्ञान-ग्राहिका या सामग्री तया तज्ज्ञान-प्रामाण्यं गृह्यत एवेति न नियमः, तज्ज्ञानस्य प्रामाण्ये तद्-अप्रामाण्याऽग्राहक-यावत्-तज्ज्ञान-ग्राहक-सामग्री-ग्राह्यत्वाऽभावो, ज्ञप्तौ प्रामाण्यस्य परतस्त्व-वादः परतो ग्राह्यत्व-वादो वा।

ज्ञानं जायमानं स्वप्रामाण्य-निश्चयं विना विषय-निश्चयतां न बिभर्तीति कथं प्रवर्तयेत्? प्रवृत्तिम् अन्तरा च कथं समर्थ-प्रवृत्ति-जनकत्व-ज्ञानम् इत्य् अन्योऽन्याश्रयः। ज्ञानस्य स्वतो विषय-निश्चय-रूपत्वे प्रामाण्य-ज्ञानस्य प्रवृत्तिमात्रेऽनुपयोगे चाऽन्योन्याऽऽश्रय-परिहारेऽपि प्रस्तुत-ज्ञानस्य प्रामाण्य-ज्ञानं संवाद-ज्ञानेन समर्थ-प्रवृत्ति-जनकत्व-ज्ञानेन वा तस्याऽपि संवाद-ज्ञानस्य समर्थ-प्रवृत्ति-जनकत्व-ज्ञानस्य च प्रामाण्य-ज्ञानं परेण ज्ञानेन तस्याऽपि परेणेत्य् अनवस्था। किञ्च प्रकृत-ज्ञानस्य प्रामाण्य-ग्राहकं ज्ञानम् अनिश्चित-प्रामाण्यकम् एव यदि ज्ञानाऽन्तरस्य प्रामाण्य-ग्राहकं तदा प्रकृतं ज्ञानम् अनिश्चित-प्रामाण्यकम् एव सर्वं विदध्याद्, मुधैव प्रामाण्य-ग्रहस्य दुराग्रहः। यदि निश्चित-प्रामाण्यकम् एव ज्ञानाऽन्तरस्य प्रामाण्यं

ग्राहयति तदा स्वप्रामाण्य-ग्राहकस्य प्रामाण्यं विना न ग्राहयेत्, एवं परम् अपि ततः परस्य प्रामाण्य-निश्चयं विनेति कस्याऽपि प्रामाण्य-निश्चयो न स्याद् इति मूलक्षय-करीयम् अनवस्था ।

स्व-सामग्रीत एव ज्ञानं स्वविषय-निश्चय-स्वरूपं प्रवर्तकत्वे स्वविषय-निश्चयत्वे च स्वप्रामाण्य-ज्ञानं नाऽपेक्षते, कृष्याऽऽदौ फल-सन्देहाद् अप्य् उपायता-निश्चय-मात्रात् प्रवृत्तिः, अन्यत्राऽपि निश्चयस्यैव प्रवृत्ति-हेतुत्वं, नतु निश्चित-प्रामाण्यकस्य निश्चयस्य । निश्चय-विषयकम् अप्रामाण्य-ज्ञानं तु प्रवृत्ति-प्रतिबन्धकम्, अतोऽप्रामाण्य-ज्ञानाऽभावे प्रामाण्य-निश्चयं विनैव ज्ञानं प्रवर्तकम् इति नाऽन्योन्याश्रयादिः । प्रकृत-ज्ञानस्य प्रामाण्य-ग्राहकम् अपि संवादादि ज्ञानम् अगृहीत-प्रामाण्यकम् एव प्रकृत-ज्ञानस्य प्रामाण्यं ग्राहयति, सर्वत्रैव प्रामाण्य-ग्रहस्य दुराग्रहो मुधैवेति स्वीक्रियते, क्वचिच् च प्रामाण्य-ग्रहस्य समुपयोगोऽभिप्रेयते ।

## प्रामाण्य-निश्चयस्य समुपयोगः—

अनभ्यस्ते नूतने विषये बहुवित्तायास-साध्ये वा यज्ञादि-कर्मणि कुतश्चित् प्रमाणात् कर्तव्य-ज्ञाने जाते इदं ज्ञानं प्रमा नवा इति अप्रामाण्य-संशयो जायते, अप्रामाण्य-संशयश् च विषय-निश्चयता-विघटकस्य विषय-संशयस्य जनकः, विषय-निश्चयाऽभावाच् च न प्रवृत्तिः, अथवाऽप्रामाण्य-ज्ञानं प्रवृत्ति-प्रतिबन्धकम् इति प्रवृत्ति-रोधो जायते, तदर्थं प्रामाण्य-परीक्षा प्रवर्त्यते, संवाद-ज्ञानं तादृशात् कर्मणः पुरुषाऽन्तरस्य फलाऽवाप्ति-ज्ञानादिकं चाऽन्विष्यते, ततश् च प्रामाण्य-निश्चयेनाऽप्रामाण्य-संशयं विधूय निष्कम्पं प्रवर्तते । तत्राऽप्य् अप्रामाण्य-संशय-निवर्तकं प्रामाण्य-निश्चायकं च ज्ञानम् अनिश्चित-प्रामाण्य-कम् एव प्रकृतस्य प्रामाण्य-निश्चायकम्, यदि तत्राऽप्य् अप्रामाण्य-संशयो न जायेत, अप्रामाण्य-संशये च जाते पुनर् अपि ज्ञानाऽन्तरेण तस्य प्रामाण्य-निश्चयः, अप्रामाण्य-संशयश् च न स्वयम्भूः सर्वत्र सुलभः, किन्तु धर्मि-ज्ञानं कोटी-द्वयोपस्थिति-विशेषाऽदर्शनं साधारण-धर्माऽऽदि-दर्शनं कारण-कलापम् अपेक्षते। स च कदाचिद् एव संभवति, प्रकृत-ज्ञान-धाराया विषयाऽन्तर-संचारेणोत्कट-प्रतिघातेन निद्राऽऽदिना च निरोधाद् धर्मि-ज्ञानाऽभावाद् एवा-ऽप्रामाण्य-संशयो नाऽऽत्मानं लभते किमुत कारणाऽन्तर-वैकल्येन ।

तथा च प्रामाण्याऽप्रामाण्ययोर् उत्पत्तौ ज्ञप्तौ च सर्वत्र परतस्त्वम्,

परं प्रामाण्य-ग्रहस्य सर्वत्र नापयोगः, न वा सर्वं प्रामाण्यं गृह्यत एवेति नाऽनवस्था इति सिद्धान्त-निष्कर्षः ।

**सिद्धान्त-विरुद्धस्य च प्रचारः—**

१९६१ खिष्टाब्दस्य मार्च-मासे वाराणसेय-संस्कृत-विश्वविद्यालये-ऽधिविशमानाया बौद्ध-दर्शन-परिषदोऽध्यक्षाणां नवनालन्दा-विहाराध्यक्षाणां महापण्डित-श्रीसातकड़ी-मुखोपाध्यायानां मुद्रितं भाषणं निम्ननिर्दिष्ट-दिशाऽभिधत्ते—काशीस्थ-चौखम्भा-संस्थया द्वानवत्युत्तरैकोनविंशति १९९२ वैक्रमाब्दे प्रकाशिताया न्यायवार्तिक-तात्पर्यटीकायाः १२-१३ पृष्ठयोर् अनुमानम् आभ्यासिक-प्रत्यक्ष-ज्ञानं च स्वतः प्रमाणम् इतरत् परतः प्रमाणम्। उदयनाचार्यस्य न्यायकुसुमाञ्जलि-द्वितीय-स्तवक-प्रथम-श्लोके तत्त्वचिन्तामणौ गङ्गेशोपाध्यायस्य च 'प्रामाण्यमप्रामाण्यञ्च उत्पत्तौ ज्ञप्तौ च परत एव' इति समानं मतम्। न्याय-प्रस्थाने च वाचस्पतेर् मतं न केनाऽपि नैयायिकेनाऽङ्गीकृतं दृश्यते।

इदं च मुखोपाध्यायानां व्याख्यानं सौगत-सिद्ध-प्रामाण्यादि-व्यवस्थापन-सुखेन 'संस्कृतम्' इत्याख्ये पत्रे 'संस्कृत-सञ्जीवन' पत्रे 'हिन्दी-राष्ट्रभाषा-परिषद्' पत्रे च द्वित्रिवर्षेभ्यः प्राक् किञ्चिन् मयाऽऽलोचितम् अस्ति, न्यायसिद्धान्त-व्यवस्थापने चेदं मुख्यतया प्रसङ्गं तनुते।

गते १९६५ खिष्टाब्द एव काशीस्थ-'सूर्योदय'-नामनि संस्कृत-पत्रे क्रमशः पञ्चषाङ्केषु महामहिम—श्रीकरपात्रि-महाभागानां लेखः प्रकाशितः। तत्राऽप्य् अनुमानम् आभ्यासिक-प्रत्यक्षादि-फल-ज्ञानम् च स्वतः-प्रमाणम् इति सिद्धवन्नैयायिकमतम् उपवर्णितम् आस्ते। एवम् एव श्रीवाचस्पतिमिश्राऽभिजन-सत्सङ्ग-मण्डलेन वाचस्पत्यङ्कनामा श्रीवाचस्पतिमिश्रस्य स्मारकत्वे एको ग्रन्थ-मणिः प्रकाशितः। तत्राऽपि स्वामिमहाभागानां प्राक्-सूचित-लेखस्य प्रायो विषय-समानतां बिभ्रल् लेखोऽपि मया कदाचिद् अवलोकितः, तत्राऽप्य् एवम् एव न्याय-मतं समुपवर्णितम् आस्ते। तादृश-प्रचारस्य मूलं कतिचिद् वाचस्पतेर् वचांस्य् एव आकलयम्। तानि चेत्थम्—'तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात् प्रमाणस्य तत्त्वं विनिश्चित्य तज्जातीयस्याऽन्यस्याऽभ्यास-दशापन्नस्य प्रवृत्ति-सामर्थ्यात् प्रागेव तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणाद् अर्थविनिश्चयेन प्रवर्तन्ते, एवञ्च दृष्टार्थ-मन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनोपधार्य तज्जातीयस्याऽदृष्टार्थस्य वेदस्य विनाऽपि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमतोक्तत्वेन निवेदयिष्यते' इति।

अत्र प्रमाणस्य तत्त्वं प्रामाण्यम् । अत्र संदेहाद् अपि प्रवृत्तिः, प्रवर्तनाऽनन्तरं प्रवृत्ति-सामर्थ्येन प्रामाण्याऽवधारणम् उक्तम्, प्रामाण्याऽवधारणं विना प्रवृत्तिर् नाऽवरुध्यत इति सूचितं च । अनभ्यास-दशापन्न-ज्ञान-प्रामाण्याऽपेक्षया-ऽभ्यास-दशापन्न-ज्ञान-प्रामाण्ये प्रवृत्ति-सामर्थ्यात् प्रागेवाऽवधारणम्, अवधारणं च प्रवृत्ति-समर्थ-ज्ञान-जातीयत्व-लिङ्गकानुमितिः, वैचित्र्यं प्रदर्शितम् । उभयोः प्रामाण्याऽवधारणे समय-भेदो लिङ्गभेदश् च दर्शितौ, परतो ग्राह्यत्वं च प्रामाण्ययोः समानम् उपवर्णितम्, अतोऽभ्यास-दशापन्न-ज्ञान-प्रामाण्यस्य स्वतोग्राह्यत्व-वर्णनं न्याय-सिद्धान्त-विरुद्धम्। सर्वत्रैव प्रामाण्ये परतो ग्राह्यत्व-सिद्धान्तः । तदनुपदम् एव द्वादशे पृष्ठे पुनः— 'न च फल-ज्ञानं परीक्ष्यते प्रेक्षावद्भिः, तस्य यादृश-तादृशस्यापीष्टत्वाद् इष्ट-लक्षणत्वात् फलस्य, तत्साधनत्वं ते परीक्षन्ते···'इत्यादि विलिखितम् अस्ति । तत्र प्रथम-मते फल-ज्ञानं न परीक्ष्यते इत्य् अनेन फल-ज्ञानं अप्रामाण्य-शङ्का नोदेतीति सूचितम्, अन्यथा संशय-संभवे कस्यचिद् वचन-मात्रेण परीक्षा नावरुध्येत । अप्रामाण्य-शङ्कायास् तत्-प्रयुक्त-परीक्षाया वाऽनवतारे फलस्येष्टत्वम् इष्ट-लक्षणत्वं च हेतुर् उक्तः । तस्य चेत्थं तात्पर्यं प्रतिभाति—इष्टत्वम् इच्छा-विषयत्वम्, इच्छायाश् च विषय-सिद्ध्या निवृत्तिर् ध्वंसः, यथा च मनसेच्छाया लौकिकं प्रत्यक्षं तथेच्छा-निवृत्तेर् अपि लौकिक-सन्निकर्षश् च प्रत्यक्षे गुणः, गुण-जन्यत्वाच् चेच्छा-निवृत्तिः प्रत्यक्षं प्रमा, मानस-प्रत्यक्षस्य च जीवने भूयः प्रसङ्गेनाऽभ्यस्ततया तत्र प्रामाण्य-संशयो न जायते, उदन्योपशान्तिर् अपि पानेच्छा-निवृत्तिर् एव । यदि चोपशान्तिः सुख-विशेषो रोचते तदा सुखस्याऽपि लौकिकं मानसं प्रत्यक्षम् अभ्यस्तं च । मत-द्वयेऽपि फल-ज्ञानस्य प्रामाण्यं स्वयं गृहीतम् इति नोक्तम् । तथा च फल-ज्ञानं स्वतः प्रमाणम् इति न्याय-मते न संभवति । फल-ज्ञाने प्रमात्वं वर्तते परं तद्-ग्रहणं नापेक्षितम् इति प्रथम-मतं मयोपवर्णित-सिद्धान्तानुसृतम् । अत एव 'एतावतैव प्रमाता······ शान्तिमपि परीक्षते' इति ब्रवीति; शङ्काया अनुदयात् प्रामाण्याऽवधारणस्या-ऽपेक्षैव नाऽस्ति इति भावः ।

'वयन्तु'-इत्यादि-द्वितीयमते तु फल-ज्ञानम् अपि परीक्ष्यते तदीयं प्रामाण्यम् अवधार्यते, अवधारणम् अपि परतोऽनुमानेन, अभ्यस्ततया प्राक्तन-गृहीत-प्रामाण्यक-सदृशतयाऽनुभूततया पश्चाद्-भाविनः सजातीयस्य नाऽपेक्षा, किन्तु प्राक्तन-सजातीयतयैव लिङ्गेन । पूर्वपूर्वतरादेर् अपेक्षायाम् अनवस्थायां तु प्रवाहस्याऽनादितैव परिहारो वर्णितः । अवधारिताव्यभिचारम्

इति अवधारित-प्रामाण्यम्, ज्ञानस्याऽर्थ-व्यभिचारो ऽसत्त्वम्। अव्यभिचारः प्रामाण्यम्।

अत्रेत्थं चिन्त्यते—प्रवृत्तेः फल-संदेहाद् अपि प्राग्-वर्णिततया प्रामाण्याऽवधारणस्य किं प्रयोजनम्? न च बहुवित्त-व्ययायास-साध्ये कर्मणि न सन्देहात् प्रवृत्तिर् अपितु अर्थ-निश्चयेन, अर्थ-निश्चयश् च प्रामाण्याऽवधारणं विना न संभवतीति तद्-अवधारणं मृग्यत इति वाच्यम्, तथाऽपि सर्वत्र प्रामाण्याऽवधारणस्य व्यर्थत्वात्, तादृशेऽपि कर्मणि प्रथमं प्रवृत्तिर् अपेक्षतां नाम प्रामाण्याऽवधारणम्, तत्सदृश-द्वितीयादि-प्रवृत्तिस् त्व् अभ्यास-दशापन्ना तादृशत्वेन चाऽप्रामाण्य-संशय-शून्या किमर्थम् अपेक्षताम्? संशयान्य-ज्ञानत्वं निश्चयत्वम्, तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यम्, न च प्रामाण्यं निश्चयत्व-घटकं न वा निश्चयस्य कारणं येन प्रामाण्याऽवधारणं विना विषय-निश्चयो न सम्पद्येत।

किं चाऽनवस्थायाम् आपतितायां पूर्वतरसाधर्म्येण पूर्वस्य पूर्वम् एवाऽवधृत-प्रमाणत्वाद् इत्युच्यते, तत्र सांप्रतिक-ज्ञाने पूर्व-ज्ञाने च किं वैलक्षण्यं येन सदृशम् अपि सत् सांप्रतिकं ग्रहीष्यमाण-प्रामाण्यं प्राक्तनं चाऽवधृत-प्रामाण्यम्। सांप्रतिकेऽप्रामाण्य-संशयो विशेषश् चेत् समायातं मार्गेण, यत्राऽप्रामाण्य-संशयस् तत्र प्रामाण्याऽवधारणं पूर्वस्य साधर्म्येणाऽपेक्षितम्, यत्र तु नाऽप्रामाण्य-संशयस् तत्राऽगृहीत-प्रामाण्यम् एव प्रमा-ज्ञानम् अर्थ-कारि। किं वा स्वद्वितीये तृतीये वा क्षणे सर्वम् एव ज्ञानम् अवधृत-प्रामाण्यकं भवतीति नियमो येन पूर्वस्य पूर्वम् एवाऽवधृत-प्रामाण्यकत्वम्? तथासति महान् भारः परतस्त्ववाद आपतेत्, तथाहि ज्ञाने जाते द्वितीये तृतीये वा क्षणे पूर्वसाधर्म्य-रूपलिङ्ग-ग्रहणम्, ततश् च व्याप्ति-स्मरण-पक्षधर्मता-सम्पत्ति-प्रभृतिभिश् चतुर्थे पञ्चमे वा क्षणेऽवधृत-प्रामाण्यकं स्याद् नाऽस्ति क्षणो ज्ञानस्य अन्यद् विधातुम्। तस्मात् प्रामाण्यस्य परतो ग्रहे अप्रामाण्य-संशयं विना सर्वोऽपि निश्चयः स्व-कार्ये समर्थ इत्येव न्याय-सिद्धान्त आद्रियते।

आसां पङ्क्तीनां तादृशाऽभिप्राय-वर्णनम् एव श्रेयः, चिरन्तन-भाषाया नव्यन्याय-परिष्कार-बीजम् अप्य् अस्पृशन्त्या नव्यन्याय-परिसरे परिसर्पन्त्या आधुनिक-दर्शन-भाषया विभेदः स्वाभाविक एव, तद्-व्याख्यान-क्लेशोऽपि फल-मुखतयाऽगण्य एव। अयं भावः—अभ्यास-दशापन्ने ज्ञाने पूर्वप्रमा-सजातीयत्वं विशेषो धर्मः, विशेषाऽदर्शनं संशय-कारणं विशेष-दर्शनं तु संशयस्य विरोधि। अतोऽप्रामाण्य-संशयस्य विषय-निश्चयता-विघटस्या-

ऽप्रसङ्गात् न पुनः प्रामाण्याऽवधारणस्याऽऽवश्यकता । विषयाऽवधारणम् एव प्रामाण्यवत् कार्यकारि तिष्ठति । पूर्व-मताद् अयं विशेषः—पूर्वमते फल-ज्ञाने स्वभावत एवाऽप्रामाण्य-संशयो न जायते इति वर्णितम्, 'वयन्तु'-इत्यादिना सजातीयत्व-विशेष-दर्शनात् नाऽप्रामाण्य-संशयः । स्वतःप्रामाण्य-ग्रह-मतस्य सर्वथा विरोधिन्य इमाः पङ्क्तयः । ज्ञान-ग्राहक-सामग्रीमात्र-ग्राह्यत्वं प्रामाण्य-ग्रहे स्वतस्त्वम्, अत्र तु स्फुटं ज्ञान-सामान्य-ग्राहक-सामग्री-बहिर्भूतस्य सजातीयत्वादि-लिङ्गस्य प्रदर्शनम् । अनुमानोपयोगि लिङ्गं व्याप्यं भवति विशेष-दर्शन-घटको विशेषोऽपि व्याप्य इति तस्याऽपि लिङ्ग-पदेनाऽभिधानम् । भ्रमे संशये चाऽर्थस्य ज्ञान-व्यभिचारः, अत्र तु विषयोऽवधृतो निश्चितः, अतो न व्यभिचारो यस्मिन् ज्ञाने तादृशम् । धनी सुखीतिवद् अवधारणाऽव्यभि-चारयोः प्रयोज्य-प्रयोजकभावो व्यज्यते । पूर्वम् एवाऽवधृत-प्रमाणत्वाद् इत्यत्रा-ऽप्य् अवधृतं प्रमाणेऽन्वितं न तु प्रमाणत्व इति बोध्यम् ।

यतश् चाऽधीयानानां स्वतः-प्रामाण्य-ग्रहस्य भ्रमः, स तु 'अनुमानस्य तु प्रवृत्ति-सामर्थ्य-जन्मनोऽन्यस्य वा निरस्त-समस्त-व्यभिचार-शङ्कस्य स्वत एव प्रामाण्यम् अनुमेयाऽव्यभिचारि-लिङ्गसमुत्थत्वात्' इति तत्रैव तात्पर्य-टीकायां प्रदर्शितः ।

अत्र स्फुटम् एव स्वतः-प्रामाण्य-शब्दोपादानम्; किन्तु प्रामाण्या-ऽनुमाने विनैव प्रामाण्यम् इत्यर्थे स्वतःप्रामाण्यम् इति शब्दो नतु ज्ञान-सामान्य-ग्राहक-सामग्रीमात्र-ग्राह्यम् इत्यर्थे, अन्यथाऽनुमेयाव्यभिचारि-प्रभृति-लिङ्ग-प्रदर्शनस्य वैयर्थ्यात्, न हि निरस्त-समस्त-व्यभिचार-शङ्कत्वस्याऽनुमेया-व्यभिचारि-लिङ्ग-समुत्थत्वस्य च ज्ञानं ज्ञान-सामान्य-ग्राहक-सामग्री-निविष्टम् । किन्त्व् अनुमितौ तादृश-लिङ्ग-समुत्थत्वादिर् गुणः, तादृश-गुणाच् च तत्र प्रामाण्यम् । तादृशो गुणः प्रमात्वस्य व्याप्यः, व्याप्य-दर्शनं तु विशेष-दर्शनं संशय-विरोधि, अतस् तत्राऽप्रामाण्य-संशयो न जायेत तेन प्रामाण्य-ग्रहो नाऽपेक्ष्यते ।

पङ्क्तेस् त्व् इत्थं समुत्थानम्—प्रकृतस्याऽनभ्यास-दशापन्नस्य ज्ञानस्य 'इदं ज्ञानं प्रमा, समर्थ-प्रवृत्ति-जनकत्वाद्' इत्यादि-न्याय-वाक्य-परिगृहीता प्रामा-ण्यानुमितिः प्रामाण्य-ग्राहिका, तस्याः प्रामाण्याऽनुमितेः प्रामाण्य-ग्राहकं किम् ? एवं तत्प्रामाण्य-ग्राहकस्य प्रामाण्य-ग्राहकं किम् इति मूलक्षयकरी अनवस्था । एवम् उत्थितायाः पङ्क्तेः समाधान-रूपाया अयम् अभिप्रायः—यावद् अनु-मिताव् अदुष्ट-हेतु-समुत्थत्व-रूप-विशेष-दर्शनं तावद् अनुमिताव् अप्रामाण्य-

संशयो न जायते, अनुमितावू अप्रामाण्य-ग्रहस्य हेतोर् दुष्टत्व-ग्रहाधीनत्वात् । अतः प्रामाण्य-ग्रहानपेक्षाऽपि प्रामाण्यानुमितिः प्रकृतज्ञान-प्रामाण्य-विषयिणी प्रमैव जायते । नेयं प्रामाण्याऽनुमानस्यैव चर्चाऽपितु सर्वाऽनुमानस्येत्य् अभिप्रेत्याह—अन्यस्य वेत्यादि, अनुमान-पदम् अनुमिति-परम् । सर्वस्याम् अप्य् अनुमितौ यावद् अदुष्ट-लिङ्ग-समुत्थत्व-ग्रहस् तावद् अप्रमाण्य-संशयाभावात् न प्रामाण्य-ग्रहाऽपेक्षेत्यर्थः ।

अतः परं तात्पर्यटीकायां प्रत्यक्षस्य शब्दस्य च ज्ञानस्याऽनभ्यास-दशापन्नस्य विशेष-दर्शनाभावाद् अप्रामाण्य-संशयो जायते तत्र च समर्थ-प्रवृत्ति-जनकत्वेन सजातीयत्वेन च लिङ्गेन प्रामाण्याऽवधारणं भवतीति प्रतिपाद्य पुनरेतादृश एव विषये मानस-प्रत्यक्षे स्वतः प्रामाण्य-शब्देनोपपादयति त्रयोदशे पृष्ठे—'ज्ञान-गत-तज्जातीयत्वलिङ्ग-ग्राहिणश् च ज्ञानस्य मानस-प्रत्यक्षस्य तादृशस्याऽदृष्ट-व्यभिचारतया परितो निरस्त-विभ्रमाशङ्कस्य स्वतः प्रमाणम् इति नानवस्था' इति ।

इतः प्राग् अनुमितौ प्रामाण्य-ग्रहापेक्षा नास्तीत्य् उपपादितम्, अनुमितिकारणस्य लिङ्ग-ज्ञानस्य कथं प्रामाण्य-ग्रह इत्य् उपपादयति, लिङ्गस्य मानसं लौकिकं प्रत्यक्षम्, लौकिक-सन्निकर्ष-गुणाच् च लिङ्ग-ज्ञाने प्रामाण्यम् उत्पद्यते, लौकिक-सन्निकर्ष-गुण-जन्यत्व-रूप-विशेष-दर्शनान् नाऽप्रामाण्य-संशयो न च प्रामाण्य-परीक्षणम् इति पूर्ववद् अभिप्रायः ।

आभ्यः पङ्क्तिभ्यः प्राग् उपक्रमे एकादशपृष्ठे समागतया 'न स्वतः प्रामाण्यं शक्याऽवधारणम्, परतस्तु दृष्टार्थेष्व् अनभ्यास-दशापन्नेषु प्रवृत्ति-सामर्थ्याद् एव तद् गम्यते' इति पङ्क्त्या स्वतः प्रामाण्येष्व् अशक्यावधारणत्वं परतः प्रामाण्ये तद्-गम्यत्वं स्फुटं वदताऽभ्यास-दशापन्नेषु तद्-अवगमस्याऽनपेक्षितत्वं सूचितम् । किं च स्वतःप्रामाण्यस्याऽशक्यावधारणत्वम् उक्त्वा समान-रूपेण विषय-भेदेन स्वतस्त्व-परतस्त्वे कथं व्यवस्थापयेत् ?, विषय-भेदेन व्यवस्थापने एकस्य शक्याऽवधारणत्वम् अपरस्य चाऽशक्यावधारणत्वं कथं युज्यते ? यथा स्वतःप्रामाण्यं सर्वत्र स्थानं न लभते तथा परतोऽपि । कथं तदेकस्याशक्यत्वम् ? तस्माद् अयं मिश्रः 'प्रामाण्यग्रहानपेक्षायाम् स्वतः प्रमाणम् इति' व्यवहरति ।

एवं च परतः प्रामाण्य-ग्रह-वादे 'न सर्वत्र प्रामाण्य-ग्रहस्य अपेक्षा' इति न्याय-सिद्धान्तानुसारं कतिपय-वाचस्पति-वचांसि प्रदर्शितानि व्याख्यातानि च । अतः परं लेखविस्तर-भिया व्याख्या-विरहितम् एव वाचस्पतिवचोऽधीत्यैव

न्याय-सिद्धान्तं व्यवस्थापयतां स्वतः-प्रामाण्यञ्च निराकुर्वतां श्रीमदुदयनाचार्याणां न्यायकुसुमाञ्जलि-द्वितीय-स्तबक-प्रथमकारिकाया एतद्-विषयकं गद्यं समुद्धरामि— 'एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत्, यदि तु स्वतो ज्ञायेत क्वचिदपि प्रामाण्य-संशयो न स्यात्। ज्ञानत्व-संशयवत्, निश्चिते तद् अनवकाशात्······यदपि झटिति प्रचुरतर-समर्थ-प्रवृत्त्यन्यथाऽनुपपत्त्या स्वतः प्रामाण्यम् उच्यते तदपि नास्ति। अन्यथैवोपपत्तेः, झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातम् अन्तरेणानुपपद्यमाना तमाक्षिपेत्, प्रचुरप्रवृत्तिरपि स्वकारणप्राचुर्यम्, इच्छा च प्रवृत्तेः कारणम्, तत्कारणमपीष्टाभ्युपायताज्ञानम्, तदपि तज्जातीयत्वलिङ्गानुभवप्रभवम्, सोऽपि इन्द्रियसन्निकर्षादिजन्मा, न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः, उपयोगे वा स्वत एवेति कुत एतत् ?, ततः समर्थप्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्तद्ग्रहणप्राचुर्याद्वा, स्वतस्त्वन्तु तस्य क्वोपयुज्यते ?, नहि पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिरपि तस्य प्रत्यक्षा स्यात्।' स्वतः प्रामाण्य-ग्रहे ज्ञानस्य ज्ञाने यथा ज्ञानत्वं भासते तथा प्रामाण्यम् अपि भासेत, ज्ञान-निश्चय इव प्रामाण्य-निश्चयोऽपि सर्वत्रोदियात्, निश्चयाच्च च यथा ज्ञाने ज्ञानत्वस्य कदाचिद् अपि संशयो न भवति तथा प्रामाण्यस्याऽपि संशयो न स्याद् इति कदाचिद् अपि इत्यादिनोक्तम्। प्रचुरा समर्था च प्रवृत्तिः प्रामाण्य-निश्चयाधीना, अन्यथा समर्था न स्यात्, प्रचुरा च झटिति स्वतः प्रामाण्य-ग्रहे संभवति, परतो ग्रहे तु लिङ्ग-दर्शन-व्याप्ति-स्मरण-परामर्शादिविलम्बापत्तेः, सर्वत्र लिङ्गदर्शनादिकौशलाऽसंभवाद् विरला स्यान् न तु प्रचुरेति स्वतः प्रामाण्य-वादिनां पूर्वपक्षे यद् अपि झटितीत्यादिग्रन्थः, तदपि नाऽस्तीत्यतश् च तत्-समाधानम्, स्फुटं सिद्धान्त-प्रदर्शनेन समाधानं तु 'न तु प्रामाण्य-ग्रहस्य क्वचिद् अप्य् उपयोग इति। न हि पिपासूनाम् इति प्रतीकम् आदाय 'नह्य् अविलम्ब इत्येव लिङ्गाऽनपेक्षता, तथा सति पिपासोपशमन-शक्त्यनुभवस्याऽप्य् अलैङ्गिकत्व-प्रसङ्ग इत्यर्थः' इति वर्धमानोपाध्यायः टीकति। प्रचुर-समर्थ-प्रवृत्त्या प्रामाण्य-ग्रहस्याऽलैङ्गिकत्वम् अननुमेयत्वं ब्रूषे तथा तादृशोपशमशक्तेर् अपि प्रत्यक्षत्वं ब्रूहि कथं लैङ्गिकत्वं मीमांसकैर् अङ्गीक्रियत इति भावः।

एतद् गद्यभागस्य किञ्चिद् अनन्तरम् 'तथा भावे वा तदतिरिक्त-विशेषानुपलम्भे कथं बाधकम्' इति गद्यांशम् तत्र वर्धमानोपाध्यायो लिखति। एवं च प्रामाण्यस्याऽनुमेयत्वे बहुवित्ताऽऽयास-साध्येऽपि गृहीत-प्रामाण्यं न ज्ञानं प्रवर्तकं तस्य प्रामाण्याऽनुमितेः प्राग् एव नाशात्, किन्तु तज्ज्ञान-समान-

विषयम् अप्रामाण्य-शङ्का-शून्यं ज्ञानान्तरम् एव, न चैवं प्रामाण्याऽनुमितिर् अफला तां विना तत्समानविषये ज्ञाने अप्रामाण्य-संशयाद् इति सार इति। अनेन च वाचस्पति-वचोव्याख्यानावसरे 'साजात्येन विशेषदर्शनेन अप्रामाण्य-संशयापसारणम् एव न प्रामाण्याऽनुमानम्' इति मद्-उक्तिः परिपुष्यति।

उद्धृत-गद्यभागस्याऽन्तिमेनांऽशेन तात्पर्यटीकान्तःपाति 'न चोदन्योपशान्तिमपि परीक्षते' इत्यादि प्रतिपादनं सन्तुलनीयम्, कदाचन समानाभिप्रायः प्रस्फुरेत्।

पूर्वोद्धृत-वर्धमान-टीकायाः 'तां विना तत्समान' इति प्रतीकम् आदाय श्रीरुचिदत्तमिश्रमकरन्दोऽपि सम्यग् वासयति— 'तद्विषयकत्वावच्छेदेन पूर्वज्ञाने प्रामाण्य-ग्रहात् तज्ज्ञानत्वम् एव विशेषदर्शनम् इत्यन्ये। वस्तुतस्तु तस्योपनीतभानसामग्रीत्वेन तत-तद्-ग्रहानन्तरम् उपनीतं प्रामाण्यं तत्र भासते इति न तत्र शङ्केति प्रत्यक्षप्रकाशे प्रपञ्चितम्, अन्यथा तस्य व्याप्यत्वेनाग्रहे शङ्काविरोधित्वानुपपत्तेर् इति ध्येयम्। धूमत्व-दर्शनस्य व्याप्ति-संशयविरोधित्ववत् पृथगेव तस्य विरोधित्वम् इति अप्य् आहुः', एकस्मिन् ज्ञाने प्रामाण्य-ग्रहे तत्समान-विषयक-सर्व-ज्ञानेषु कथं प्रामाण्य-ग्रहणस्याऽपेक्षा न जायते ? कथं चाऽप्रामाण्य-संशयोऽपसार्यत इत्यस्य चतुर्धोपपादनं प्रकाशयति मकरन्दः।

एवं स्व-प्रदर्शित-न्याय-सिद्धान्ते प्राचीन-नवीनयोर् आचार्ययोः संवादम् उपहृत्य सम्प्रति तत्त्वचिन्तामणेःकतिपय-वचांसि प्रदर्श्योपसंहरामि, तत्र प्रामाण्यवादस्य ज्ञप्ति-प्रकरणे अगृहीताप्रामाण्यम् एव ज्ञानान्तरस्य प्रामाण्यग्राहकं ज्ञानम् इति दर्शयति— ननु नान्यगृहीत-प्रामाण्यं ज्ञानं परप्रामाण्यनिश्चय-रूपम् अनवस्थानात्, नाऽपि स्व-ज्ञायमान-प्रामाण्य-ग्रहापत्तेः, अतोऽगृहीत-प्रामाण्यम् एव ज्ञानं पर-प्रामाण्य-निश्चय-रूपम् आस्थेयम्, तथा च व्यवसायोऽप्य् अगृहीत-प्रामाण्य एव स्व-विषयं निश्चाययतु, किं विषय-निश्चयाऽर्थं तत्प्रामाण्य-निश्चयेन, अथ व्यवसायस्याऽप्रामाण्यदर्शनान् न तन्मात्राद् अर्थ-निश्चयः, तर्हि प्रामाण्याऽनुमितेर् अप्रामाण्यदर्शनान् न ततोऽपि प्रामाण्य-निश्चय इति चेत्, न ब्रूमो ज्ञानप्रामाण्य-निश्चयाद् एवाऽर्थ-निश्चय इति, किन्तु यत्राऽप्रामाण्य-शङ्का नाऽस्ति करतलाऽऽमलकादि-ज्ञाने तत्र व्यवसाय एवाऽर्थ-निश्चय इति तत एव प्रवृत्तिर् निष्कम्पा, यत्राऽनभ्यास-दशायां प्रामाण्य-संशयेनाऽर्थनिश्चयं परिभूयाऽर्थ-संशयः, तत्र प्रामाण्य-निश्चयाधीन-ज्ञानाद् अर्थं निश्चित्य निष्कम्पं प्रवर्तते नाऽन्यथेति सर्वाऽनुभव-सिद्धम्, अत एवा-

गृहीतप्रामाण्यम् एव ज्ञानं परप्रामाण्यं निश्चाययत्य् अप्रामाण्य-शङ्का-कलङ्काऽभावात्। यत्र तु प्रामाण्य-ज्ञानेऽप्रामाण्य-शङ्कया प्रामाण्य-संशयस् तत्र प्रामाण्य-ज्ञाने प्रामाण्य-निश्चयाद् एव प्रामाण्य-निश्चयः, एवं यावद्-अप्रामाण्यशङ्कं तज्ज्ञान-प्रामाण्य-निश्चयाद् एव तत्-निश्चयः, न चैवम् अनवस्था चरम-ज्ञान-प्रामाण्य-ज्ञान-ज्ञानस्य ज्ञानाऽभावेन कोटिस्फुरणाभावेन विषयाऽन्तर-सञ्चारेण वा प्रामाण्य-संशयाऽनवश्यम्भावात्। इति।

प्रवृत्ताव् अपि सर्वत्र प्रामाण्य-ज्ञानं नापेक्षितम् इति २६५ पृष्ठे द्रष्टव्यम्—एवं बहुवित्तायास-साध्ये स्वर्ग-साधने याग इति ज्ञानं न गृहीत-प्रामाण्यं प्रवर्तकम् प्रामाण्यानुमितेः प्रागेव तस्य नाशात्, किन्तु तज्ज्ञान-समान-विषयकम् अप्रामाण्य-शङ्का-शून्यं ज्ञानान्तरम् एव। नन्वेवं बहुवित्तायास-साध्ये निष्कम्पप्रवृत्ताव् अनुपयोगित्वान् निष्फलं प्रामाण्य-ज्ञानम् इति किं तदुपायाऽन्वेषणेनेति चेन् न, स्वर्ग-साधनं याग इति ज्ञान-प्रामाण्ये निश्चिते तत्-समान-विषयक-ज्ञानान्तरे अप्रामाण्य-शङ्का न भवतीति ज्ञानान्तरम् अगृहीत-प्रामाण्यम् अपि स्वार्थ-निश्चय-रूपं निष्कम्प-प्रवृत्तिं जनयतीति अप्रामाण्य-शङ्काप्रतिबन्धद्वारा निष्कम्प-प्रवृत्ताव् उपयुज्यते प्रामाण्य-ज्ञानम् इति न निष्फलम्। अतः परं वाचस्पतेः स्वतः-प्रमाण-शब्द-घटितम् अनुमानविषये वचनं तथैव व्याख्याति यथा मया प्राक्प्रदर्शितम्। तेन च 'इदं वाचस्पतिमतं न केनाऽपि नैयायिकेनाङ्गीकृतम्' इत्यादि मुखोपाध्यायानां लेख एतद्-ग्रन्थाऽनवलोकन-कृतो धाष्ट्र्य-प्रयुक्त इत्य् अभिव्यज्यते। तथाहि २६६ पृष्ठे यत् त्व् अनुमानस्य निरस्त-समस्त-विभ्रमाऽऽशङ्कस्य स्वतः प्रामाण्य-ग्रह इत्य् उक्तम् तद् धूमवति वह्नि-ज्ञानत्वम् अनुमितेः प्रामाण्य-नियतम् अनुव्यवसायेनोपनीतम्, अतो विशेष-दर्शनान् न तत्राऽप्रामाण्य-शङ्केति प्रामाण्य-निश्चयाद् एवाऽप्रामाण्य-शङ्का-विरहाद् अर्थं निश्चित्य निष्कम्प-व्यवहार इत्य् अभिप्राय इति। तदनुपदम् एव च 'वस्तुतस्तु परतः-पक्षे न क्वचिदपि प्रामाण्यग्रहः प्रवर्तक' इति सिद्धान्तस्य स्फुटोक्तिर् अपि।

झटिति प्रचुर-समर्थ-प्रवृत्ति-विषये श्रीमद्-उदयाचार्य-वाचम् अनुसरत्य् अयं तत्त्वचिन्तामणिर् इति विद्व-वाचकानां सौकर्याय प्रदर्शयामि—झटिति प्रवृत्तिस् तु करचरणादिमति शरीरज्ञानत्वादेर् विशेषस्याऽनुव्यवसायेन ग्रहाद् अप्रामाण्य-शङ्का-शून्याद् व्यवसायाद् एव, न प्रामाण्य-ज्ञानं प्रवर्तकम् इत्य् उक्तम्। झटिति तत्समवधानं तु स्वकरणाधीनम्। न हि पिपासूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिर् अम्भसीति पिपासोपशमन-शक्तिर् अस्य प्रत्यक्षेति।

# दण्डिनः पदलालित्यम्

धर्मेन्द्रकुमारगुप्तः*

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

साहित्य-विश्रुते पारंपरिकेऽस्मिन् पद्ये महाकवेः कालिदासस्य कृतिषूपमा-प्रयोग-वैशिष्ट्यं, भारवेश् च काव्येऽर्थ-गौरवं, दण्डिनो गद्ये पद-लालित्यं, माघ-काव्ये च त्रयाणाम् एव गुणानाम् एकत्र समाहार इति निर्दिष्टम् अस्ति। नाऽयम् अस्या उक्तेर् अभिप्रायो यत् कालिदासस्य काव्ये उपमेतर-गुणानाम् अभावः, किरातार्जुनीये च प्रसन्नोपमानाम् अभावो विद्यते, दण्डि-कृतिषु वा हृद्योपमा-प्रयोग लाघवम् अर्थगरिमा च न लक्ष्येते इति। एतावद् एवाऽत्राऽभीप्सितं विवक्षितत्वेन यद् एतेषां महाकवीनां काव्यानि तत्-तद्-गुण-विशेष-विशिष्टानि सन्तीति।

प्रस्तुतश् चाऽत्र विषयो दण्डिनः कृतिषु पदलालित्यं वर्तते। चर्चा चेयं काव्यादर्शे पद-लालित्यस्य सिद्धान्त-पक्षं, गद्य-ग्रन्थयोश् च दशकुमारचरिताऽवन्तिसुन्दरीकथयोस् तस्य प्रयोग-पक्षम् आश्रित्य प्रवर्त्स्यति। दण्डी खलु पद-रचना-सौष्ठव-संकल्पनां प्रति प्रतिबोधवान् आसीद् इति निजप्रपितामह-दामोदरस्वामि-काव्य-वर्णनाऽवसरे तदीयेन ललित-पद-विन्यास-गुणोल्लेखेन सुतरां निश्चीयते[1]। तस्मिन्न् एव प्रसङ्गे स दामोदर-स्वामि-विरचितां पल्लवराज-सभायां गन्धर्वेण केनाऽप्य् उपवीणिताम् आर्याम् एकाम् उद्दिश्य पल्लवपति-सिंहविष्णुवर्म-मुखेनाऽभिव्यनक्ति प्रश्नम् इमम्— 'भद्र,...कस्य चेयं वर्ण-रचना माधुर्यवती प्रसन्ना चेन्दुकरकलिकेव श्रवणानन्दम् उत्पादयति ?'[2] इति।

आचार्य-दण्डिनः काव्यादर्शे संदर्शितेषु दशसु वैदर्भ-मार्ग-प्राणभूतेषु गुणेषु[3], माधुर्यं श्लेषः सुकुमारता समता चेति चत्वारो गुणाः पद-लालित्यं

*एम. ए., एम-ओ.एल्., पी-एच.डी.: प्राध्यापकः, पटियाला-विश्वविद्यालयः; पंजाब।

१. अवन्तिसुन्दर्याम् = अव० (ख्रि० १९५४ तमेऽब्दे के. एस्. महादेव-शास्त्रिणा संपादिते संस्करणे) पृ० १०: 'स ललितपदविन्यासया चतुरहृद्यालंकारया सरस्वत्या...स्वयमुपेत्य सस्नेहमस्वज्यत।' २. अव० (तत्रैव) पृ० ९। ३. तु० काव्यादर्शे = काव्य० १,४१-२।

विशेषणोपकुर्वन्ति; एषु च माधुर्यं तावल् ललित-पद-रचनाऽऽत्म-भूतं, सविशेषम् इदं तत्त्वं पोषयति। प्रसादोऽर्थव्यक्तिश् चेति गुण-द्वयम् अपि सामान्यतः पद-रचना-सौष्ठवम् आपादयति। माधुर्य-गुणस्य शब्द-माधुर्यम् अर्थ-माधुर्यम् इत्य् अनयोर् भेदयोः, पूर्वं हि वाग्-रसात्मकं माधुर्यं समान-श्रुत्यात्मक-सानुप्रास-पदासत्ति-रूपः शब्द-गुणः। पद-लालित्य-घटनायां सुविन्यस्तयोर् अनुप्रास-यमकयोर् महान् योग इति दण्डि-मतम्। एताव् अलंकारौ प्रति कविर् अयं विशेषाऽऽदरवान् इति काव्यादर्शे माधुर्य-गुणेऽनयोः समावेशात्, तृतीय-परिच्छेदे च यमकाऽलंकारस्य विस्तृत-निरूपणेन संलक्ष्यते[१]। यद्यपि स यमकं नैकान्त-मधुरं स्वीकरोति, तथाऽपि नाऽसौ यमके माधुर्य-स्थितिं सर्वथा प्रत्याचष्टे। अभिप्रेतं त्व् अत्रेदम् एव प्रतीयते यत् कदाचित् स्थिति-विशेषेऽलंकारोऽयं न माधुर्यम् आतनोतीति। दण्डि-काव्ये ललित-कान्त-पद-संरचना प्रमुखतोऽनुप्रास-यमक-संवलिताभिः पदावलीभिः संपन्ना भवति। सहैव शब्द-माधुर्येण बन्ध-शैथिल्याऽभावरूपः श्लेषगुणः, बन्ध-पारुष्याभावात्मकः सौकुमार्यगुणश् चाऽपि पद-लालित्यायाऽनिवार्यौ, यतो हि बन्ध-शैथिल्यं बन्ध-पारुष्यं चेति दोषौ माधुर्य-गुणस्य परिपन्थिनौ स्तः। बन्ध-शैथिल्य-दोषात्, सत्य् अप्य् अनुप्रास-प्रयोगे, माधुर्यस्य हानिर् जायते। यथा— 'स्मरः खरः खलः कान्तः कायः कोपश् च न कृतः' इत्यत्र, 'मालतीमाला लोलालिकलिला' इत्यत्र वा[२]। बन्ध-पारुष्य-दोषोऽपि माधुर्य-प्रतिबन्धकः, यथा— 'न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणात्'[३] इत्य् अस्मिन् पद्यांशे, 'हृदयम् उद्धर्षयन्न् उद्धुर-ध्वनिधाराऽवधीरित-धाराधरध्वनिर् अभ्यधत्त'[४] इत्य् एतस्मिन् गद्य-खण्डे वा। एवं च माधुर्य-स्थितिर् बन्ध-शैथिल्य-रहिते (अर्थात् श्लेषगुणान्विते) बन्ध-पारुष्य-दोषाऽपाकृते (अर्थतः सुकुमारतागुण-संयुते) पदे पद-समूहे वा संभवतीति दण्डिनोऽभिप्रेतम्। एवम् एव, माधुर्य-गुण-विन्यासे बन्ध-वैषम्याऽभाव-रूपायाः समतायाः स्थितिर् अप्य् आवश्यकी वर्तते, मृदु-कठोर-मध्यम-बन्धेषु, सामञ्जस्याऽभावे मधुरत्व-हानिः स्याद् इति। यथा—

कोकिलालापवाचालो मामेति मलयानिलः।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः[५] ॥ इति।

---

१. तु. काव्य० १,५९-६१; ३,१-७७। दण्डिकृतं यमक-विवेचनं संस्कृत-काव्यशास्त्रेतिहासे सर्वाङ्गीणताया हेतोर् अद्वितीयं स्थानं भजते। अत्र विषये तु. डॉ० सु० कु० दे-महोदयस्य संस्कृतकाव्यशास्त्रेतिहासः (हिस्ट्री आफ् संस्कृत पोएटिक्स्), द्वि. भा., पृ० ६४। २. तु. काव्य० १, ५९-६०; १,४३ च क्रमशः। ३. काव्य० १,७२। ४. अव० पृ० ७४। ५. काव्य० १,४८।

पद्येऽस्मिन् पूर्वार्धीयस्य मृदु-बन्धस्योत्तरार्धीयस्य च कठोर-बन्धस्य मध्ये सामञ्जस्य-विरहाद् माधुर्य-हानेः प्रसक्तिः । एवं पद-लालित्याऽपरनाम्न्य् अनुप्रास-यमकाऽनुप्राणित-शब्द-माधुर्य-गुणे पद-बन्ध-गताः शैथिल्यं पारुष्यं वैषम्यं चेति त्रयो दोषा न स्युः, अर्थतश् च एतद्-दोषाभावात्मकाः क्रमशः श्लेषः सुकुमारता समता चेति त्रयः पद-बन्ध-गुणाः काव्ये विद्येरन्न् इति सिद्ध्यति । यथा—

चन्द्रे शरन्निशोत्तंसे कुन्दस्तबक-संनिभे ।
इन्द्रनीलनिभं लक्ष्म संदधात्यलिनः श्रियम् ॥[१]

यद्यपि माधुर्यं प्राधान्येन शब्द-गुण एव तथाऽप्य् अर्थ-गुण-रूपेणाऽपीदं गृह्यते काव्य-शास्त्रिभिः[२] । आचार्यदण्डय् अप्य् अग्राम्यार्थरूपं वस्तु-रसात्मकं माधुर्यम् उल्लिखति, यच्चार्थगुण एव, न शब्द-गुणः । अतश् चाऽयं गुणो न प्रत्यक्षतः पद-लालित्योपकारकः । अन्यतश् च प्रसादोऽर्थव्यक्तिर् इत्य् एताव् अर्थगुणौ प्रतीति-सुभगत्व-द्वारा वाङ्-माधुर्य-प्रतिष्ठापनया वाग्-रसात्मकं माधुर्य-गुणम् अनुगृह्णीतः, अनयोर् अभावे भाव-दुर्बोधत्व-मार्गेण वाग्-रस-हानेः संभवात् । तथाहि, सुललित-पदविन्यासमयेऽपि काव्यबन्धे यत्र् अप्रसिद्धानां पदानां संनिवेशो जायते, तैश् चार्थ-प्रतीतौ क्लिष्टत्वम् आपद्यते, तर्हि सत्य् अपि पद-सौष्ठवे माधुर्याभावः प्रसज्यते, यथा स्वयं दण्डिनैव प्रदत्तेष्व् अनेकेषु यमकोदाहरणेषु विलोक्यते[३] । एवम् एव, अनेयार्थत्व-रूपाऽर्थ-व्यक्तिर् अपि काव्ये माधुर्य-स्थित्या आवश्यको गुणोऽस्ति, अर्थस्य नेयत्वे भाव-प्रतीतेर् दुष्करता स्याद् इति । इत्थं प्रसादाऽर्थव्यक्ति-गुणापादितं प्रतीति-सुभगत्वम् अपि परोक्षतः पद-माधुरी-साहाय्यम् आपादयति ।

आचार्यकविर् दण्डी तथ्यम् इदं काव्यादर्शे सिद्धान्ततः, दशकुमार-चरिते अवन्तिसुन्दर्यां च व्यवहारतः समर्थयति । तदीय-गद्ये पदे पदे पदमाधुरी श्रोत्रोत्सवं जनयति । ललित-पद-विन्यास-विषयेऽद्वितीयः खलु दण्डी संस्कृत-साहित्ये । माधुर्याधायकस्याऽनुप्रासस्य समायोजने तस्य प्रतिभाऽप्रतिमा वर्तते । तदीयाऽनुप्रासाः सुमधुर-शब्द-संगीतमयाः कोमल-कान्त-

---

१. काव्य० १, ५६. अथापि तु. १, ५७ । २. तु. वामनः ( काव्यालंकारसूत्रे, ३,१,२०; ३,१० ), भोजदेवः सरस्वतीकण्ठाभरणे, १, ६८ प्रभृ०; शृङ्गारप्रकाशे, ९ ( गो० रा० ज्यौतिषिकसंपादिते मैसूरसंस्करणे १९६३ ख्रि०, पृ० ३४५ ) ३. विशेषतः तु. काव्य० ३,३४;४४;४६;४८;५० ।

पद-चयनेन व्यवच्छिन्नाः सन्ति, तेषां पाठः श्रुति-सुखाऽऽवहो हृदयाऽऽवर्जकश्च चाऽस्ति। कतिपयोदाहरण-संग्रहोऽत्र विधीयते 'येन मायन्तु धीमन्तो मधुनेव मधुव्रताः'[१]—

१. अयुग्मशरः शरशयने शाययिष्यति।[२]

२. क्षरितनीहारे निजनिलयनिलीननिःशेषजने निशान्तशीते निशीथे…।[३]

३. जनं चैनं सह नयाऽनया कन्यया कन्यागृहं हरिण-नयनया।[४]

४. यस्मिंश् च भूभुजि भुञ्जति भुज-स्तम्भेन भुवं भोग-भङ्गो भुजंगमानां न च भुजंगमाः।[५]

५. ईदृश्या तु तत्र साधौ प्रतिरूपया प्रतिपत्त्या प्रकृतः प्रहारवर्मा प्रिय-सुहृत्प्रवासेऽपि प्राणान् न पर्यत्यजत्।[६]

६. निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकण-निकरनिगीर्ण-दशदिशि निद्रानिगडितनिखिलजनदृशि…।[७]

७. मध्यमस्तु तेषां मनोरथो मनोरथ इव चिरेणोपपन्न…धर्मस्य माहात्म्यवतो महितमहाशब्दौघपूरितान् महीभृन्मानितान् मर्यादारक्षणोचितान् महागुणरत्नराशिभाजो महासत्त्वान् महोदधीनिव मध्यमो लोकश्चतुरः सुतानलभत।[८]

८. सुभगंमन्येन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरीकृता।[९]

९. प्रज्वलत्सु ज्वलनेष्वावप्रपीतासु प्रतीयमानाः प्रलयायं पेतुः प्रलघुपातं पतंगाः।[१०]

१०. रक्षितर्यमुष्मिन् न लेशोऽपि लोभस्य, लवोऽपि लाघवस्य, कणिकाऽपि कार्पण्यस्य, क्षोदोऽपि क्षुद्रभावस्य, शकलमप्यकुशलस्य, रजोऽपि राज्यदाहस्य… प्रजाभिरज्ञायत।[११]

वर्ण-समूहावृत्ति-स्वरूपो यमकालंकारोऽपि माधुर्यगुणाऽऽपादने साहाय्यम् आतनुते, यद्यपि नैकान्त-मधुरोऽयम् अनुप्रासवत्, यथा किल स्वयम् आचार्य-दण्डी मन्यते[१२]। दण्डि-परिलक्षितेषूपपञ्चाशेषु भेदेष्व् अनेके तु शब्द-

१. काव्य १, ५१ (किंचित्परिवर्त्य)। २. दशकुमारचरितम्=दश० पृ० १११ (१९५१ तम-ख्रिष्टाब्दीये व्याख्याचतुष्टयोपेते निर्णयसागरसंस्करणे)। ३. दश० पृ० २३६। ४. दश० पृ० २४०। ५. अव० पृ० ८। ६. अव० पृ० १७२। ७. दश० पृ० २४५। ८. अव० पृ० ११। ९. दश० पृ० ९४ १०. अव० पृ० १०३। ११. अव० पृ० १५४। १२. काव्य० १,६१।

क्रीडामात्रम् एव निदर्शयन्ति । ये तु तत्र बन्ध-शैथिल्य-पारुष्य-वैषम्यादि-दोष-मुक्ताः प्रसादाऽर्थव्यक्ति-गुण-समुदिताश् च स्वाभाविक-रूपेण वर्ण-संहति-व्यावृत्तिम् उपस्थापयन्ति, ते तूपादेया माधुर्य-गुणाऽन्वयेन हेतुना । यथा—

रमणी रमणीया मे पाटला पाटलांशुका ।
वारुणीवारुणीभूत-सौरभा सौरभास्पदम् ॥ इति ।[१]

लालित्य-समन्वितानि कतिचिद् यमकोदाहरणानि दण्डिनो गद्यग्रन्था-भ्याम् उद्ध्रियन्तेऽत्र—

१. पातितश्च कोपितेन कोऽपि तेन मयि शापः ।[२]

२. संस्कारेण नीरजसा नीरजसान्निध्यशालिनि सहर्षोलिनि सरसि सरसिज-दल-संनिकाशच्छायस्य··· ।[३]

३. मदगन्धविदग्धविशारदे शारदे ।[४]

४. देव, देव-प्रसादादेव··· ।[५]

५. भारविं रविमिवेन्दुः ।[६]

यमकस्याऽतिप्रसिद्धं रोचकं चैकं निदर्शनं दशकुमार-चरितस्याऽन्यलेख-कोपनिबद्धायां पूर्वपीठिकायाम् अप्य् अस्ति, तद् अप्य् अत्रोदाह्रियेत—'कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाऽभ्युदयाऽशंसं राजानमकार्षुः ।'[७]

सामान्यतोऽपि दण्डिनः पद-शय्या सुकोमला प्रसादमयी सरसा सरला चाऽस्ति । प्रासादिकता तस्य गद्यस्य प्रमुखं वैशिष्ट्यं वर्तते, यस्याः खल्व् अभावः संस्कृतस्य प्रायेण बहुषु लेखकेषु, विशेषतश् च गद्यकारेषु संलक्ष्यते । दण्डी साधारणतो वैदर्भ-मार्गम् अनुसरति गद्य-रचनायाम् । इमं मार्गं प्रति तस्याऽऽग्रहः काव्यादर्शेऽवन्तिसुन्दर्यां च स्फुटम् आलक्ष्यते ।[८] गङ्गादेवी-कृता कवि-प्रशस्तिर् अपि इदम् एव तथ्यं लक्ष्यीकरोति—

आचार्यदण्डिनो वाचामाचान्तामृतसंपदाम् ।
विकासो वेधसः पत्न्या विलासमणिदर्पणम् ॥[९]

( शिष्टं पृ. १५९ द्र. )

---

१. काव्य० ३, १८ । २. दश० पृ० ६९ । ३. दश० पृ० २५० । ४. अव० पृ० ३२ । ५. दश० पृ० १२२ । ६. अव० पृ० १० । ७. दश० पूर्व० पृ० २५ । ८. तु. काव्या० १, ४२; ४४; ५४;६०; अव० पृ० २ ( पद्य सं० १५ ) । ९. मधुराविजये,१ १० ।

# श्रद्धाञ्जलिः

## (लालबहादुर-शास्त्रिणे)

*जगदीशझाः

यः शैशवे जनक-पाद-पयोज-सेवा-
भाग्य-च्युतोऽपि जननी-परिपाल्यमानः ।
वेदान्त-शास्त्र-जलधिं परितीर्य लब्धा-
ऽखण्डात्म-बोध उदितोऽवनि-मण्डलेऽस्मिन् ॥ १ ॥

श्री-कार्मचन्द्रि-सरणिं रमणीय-लक्ष्याम्
आसाद्य देश-गत-सङ्कट-पाटनाय
आप्राण-निर्गमनमुद्यतमान आसीच्
श्रद्धाञ्जलिं सुवितरामि बुधाय तस्मै ॥ २ ॥

जातस्य नूनमिह मृत्युरिति प्रसिद्धं
सिद्धं सदैव भुवने निधनेऽपि यस्य ।
सु-स्थायि कुन्द-शरदिन्दु-सितं यशोऽस्ति
तस्यास्ति जीवनमतः स उपस्थितोऽस्ति ॥ ३ ॥

कीर्त्यात्म-जीवन-धराय पराय भूत-
पूर्वाय मन्त्रि-पदवी-लसिताय भक्त्या ।
सर्वस्व-दान-शुभ-पात्र-वराय तस्मै
श्रद्धाञ्जलीन् उपहरामि सुधीश्वराय ॥ ४ ॥

योऽकिञ्चनोऽपि मति-वैभव-सद्मनोऽभून्
निर्व्याजमाजनित एव विशुद्ध-भावः ।
आत्मीय-भाव-भृत-मानस उद्-गतोऽभूच्
श्रद्धाञ्जलीन् अहरहर् वितरामि तस्मै ॥ ५ ॥

---

*व्याकरणाचार्यः, विश्वेश्वरानन्द-संस्थानम्; होशिआरपुरम् ।

# संस्कृतं कथं प्रसरेत् ?

*साधुरामः

प्रकृति-प्रत्ययाऽऽदिना व्याकृता वाक् 'संस्कृतम्' उच्यते । तथा चाऽऽह भर्तृहरिः—'संस्कृतं नाम दैवी वाग् अन्वाख्याता महर्षिभिः ।' संस्कृते कथम् अयं संस्कार आहितः ? इत्येष प्रश्नो रुचिकरस् तदर्थं निरुक्त-व्याकरणादीनाम् अध्ययनम् अनिवार्यम् । शब्दार्थयोः कः सम्बन्धो ध्वनि-भावयोश् च किं सामञ्जस्यं, शब्द-निर्माणे वस्तूनां बाह्याभ्यन्तर-गुणानां समावेशश् च कथं स्याद् इति सर्वम् एतत् संस्कृतस्य गहनाध्ययनेनैव ज्ञातुं शक्यते ।

संस्कृतं नामोत्तरापथ-भाषोपभाषाणां जननीति निर्विवादं सत्यम् । परम् अनेन दक्षिणापथ-भाषासु, कासुचिद् विदेशीय-भाषास्व् अपि कृतः पर्याप्तः प्रसार इत्य् अत्राऽपि न संदेहः । तेलुगु-मलयालम्-कन्नड-प्रभृतीनां दाक्षिणात्य-भाषाणां शब्द-कोशस् तु संस्कृत-प्रायः । इण्डोनेशीय-भाषायां संस्कृत-शब्दानां परिभाषाणां च चत्वारिंशतः प्रतिशतं समावेशः । मलय-स्याम-यव-बालि-प्रभृति-द्वीपोपद्वीपानां भाषास्व् अपि संस्कृत-तत्सम-तद्भव-शब्दानां प्राचुर्यं दृश्यते । पुरा प्रचलिता लेखोपकरणी ब्राह्मी-लिपिर् लोके भूयिष्ठानाम् अद्यतनीनां लिपीनां जन्म-दात्री ।

संस्कृतम् अस्य विश्वस्याऽखिल-भाषाणां प्राचीनतमम् । इदं भारतीय-धर्मस्य संस्कृतेश् च मधु-स्यन्दि वचः । संस्कृत-वाङ्मयम् अपि सर्वेषां वाङ्-मयानां प्राचीनतमं भूयिष्ठं च । भारत-संस्कृति-साहित्यं चाऽतीव विशालं संपन्नं, वैविध्य-पूर्णं मौलिकं चाऽस्ति । तथाहि—

१. साक्षात्कृत-धर्मभिर् वैदिकर्षिभिर् एव ब्रह्माण्डे मर्त्येषु चाऽनु-वर्तमानः 'ऋतस्य पन्थाः' प्रथमं दृष्टः ।

२. तत्पूर्वम् अत्रत्यैर् एव ऋषिभिः सुख-दुःख-राग-द्वेषादि-द्वन्द्वानां मौलिकम् ऐक्यम् अनुभूतम् ।

३. अस्मद्-देशस्य योगिभिर् एव 'योग-समाधि-विद्या' शास्त्र-रूपेणोप-निबद्धा, पिण्ड-ब्रह्माण्डस्यैक्यं चाऽनुभूतम् ।

---

*एम० ए०; प्राध्यापकः; संस्कृत-विभागे कुरुक्षेत्र-विश्वविद्यालयः; कुरुक्षेत्रम् ।

४. संस्कृत-वाङ्मयस्य वैविध्यं वैचित्र्यं च जगतः प्राचीन-वाङ्मयाऽन्तरेषु क्वाऽपि नोपलभ्यते । धर्म-शास्त्राणि, नीति-शास्त्राण्य् अर्थ-शास्त्राणि, काम-शास्त्राणि, स्मृतयो, दर्शनानि, शिक्षाऽऽदीनि षडङ्गानि, आयुर्वेदो, धनुर्वेदस् तन्त्राणि, संगीत-वास्तु-हस्त्यश्वादि-विद्याः, पाथः-पाक-वणिक्-शास्त्राणि, चतुःषष्टि-कलाः— इत्यादीनां ज्ञान-विज्ञान-पराणां विद्यानां कोषः संस्कृत एवोपलभ्यते, नाऽन्यत्र ।

५. निरुक्तं, व्याकरणं, शिक्षाऽलङ्कारशास्त्राद्या वाङ्मयस्याऽऽधार-भूताः सर्वा विद्याः संस्कृत एवोपलभ्यन्ते ।

६. वेदानाम् उद्गातृभिः सर्वतः प्राक् साम-गानं स्वर-लिपि-रूपेणोपनिबद्धम् ।

७. गणतन्त्र-बीज-भूतस्य राज-हीन-धर्म-राज्यस्य, सर्वस्व-दक्षिणात्मक-विश्वजिद्-यागस्य, अहिंसा-व्रतादीनाम् अनेकेषां मौलिक-भावानां चोद्भावयित्री संस्कृत-संस्कृतिर् एव ।

८. भारतीय-जैन-दर्शनेष्व् एवाऽनीश्वर-वादस्याऽध्यात्मवादेन सामञ्जस्यं प्रतिपादितम् ।

९. आख्यानाऽऽख्यायिका-पशु-पक्षि-कथा-कथान्तर्गत-कथानां मूल-स्रोतः संस्कृतम् एव ।

१०. संस्कृत-संस्कृतेर् एवाऽयं विशेषो यद् अनयाऽनुप्राणिता भारतीया विदेशेषु सांस्कृतिकम् एव विजयं चक्रुर् न तु रुधिर-स्राविभिर् घोरैर् युद्धैः पर-दमन-लुण्ठनात्मकं विजयम् ।

११. कर्म-फल-पुनर्जन्माऽऽद्य आध्यात्मिकाः सिद्धान्ता अत्रत्यैर् ऋषिभिर् एवाऽन्तर्दृष्ट्या प्रतिपादिताः ।

अहो ! महद् अस्मद्-देशस्य दौर्भाग्यं यद् ईदृशी परिष्कृततमोन्नततमा भावाऽभिव्यक्तौ च प्रगल्भतमा भाषा स्व-गौरव-पदात् प्रच्याविता सतीदानीं तैर् एव जनैर् मृत-भाषा-नाम्नाऽभिधीयते येषां श्वास-निःश्वासा अद्याप्य् अस्या शब्दाऽऽमोदेन सुरभिणः सन्ति । अज्ञानोपहता वराकास् ते न जानन्ति यज् जन्म-प्रभृति मरण-पर्यन्तं सर्वम् एव संस्कार-जातं संस्कृत-मन्त्रैर् एव संपन्नं भवति । सन्ध्योपासना, गीता-पाठः, सत्य-नारायण-कथादीनि पुण्य-कर्माणि संस्कृतेनैव सम्पद्यन्ते । अबोध-विक्लवा मूढाः स्वयम् एव मृतप्रायाः स्वाभिमान-शून्या विद्युद्-धारा इव प्रच्छन्ना राष्ट्रस्य जीवन-स्रोतः संचालयन्तीं संस्कृतं

नाम भाषां मृतां मन्यन्ते। आततायिनाम् अत्याचाराः, कराल-कालस्य निर्घृणा आघाता अप्य् एनां हन्तुं नाऽलंबभूवुः। अद्याप्य् एषा संसारस्याऽखिलानाम् उत्कृष्टतमानां भाषाणां पुर आत्म-गौरवेण समुन्नत-शिराः स्थातुं शक्नोति। केवलम् अस्माभिर् विदेशीय-च्छद्मापोह्य स्वात्म-बोधः कर्तव्यः। अस्माभी राजनीतिक-स्वतन्त्रता नाम लब्धा, किन्तु भावना-संलापादिषु, वेष-भूषादिषु च वयम् अद्याऽपि पाश्चात्यानां दासा एव वर्तामहे। कौटुम्बिक-जनान् डैडी-मम्मी-अङ्कल्-आंट-इत्यादिभिः पदैः सम्बोधयन्तो हन्त ! न लज्जामहे, प्रत्युत गौरवम् अनुभवामः। एवं गते, पुनरुत्थानाय, पुरोगमनाय, शान्ति-पथे, अध्यात्म-मार्गे च संसारस्य नेतृत्व-करणायाऽस्माभिः स्वान्तराऽऽत्मा तावद् अन्वेष्टव्यः सम्यग् बोद्धव्यश् च।

## शिक्षा-पद्धतेः परम्परा—

पुरा किल विद्याऽध्ययनं चतुर्णां वर्णानां धर्मस्याऽङ्गम् आसीत्। श्री की-महोदयेन एंशेंट इण्डियन् एजुकेशन्-नाम्नि स्व-ग्रन्थे लिख्यते— 'ब्राह्मणानां शिक्षा-पद्धतिः प्राचीनतमात् कालाद् एव परम्परयाऽविच्छिन्नाऽऽसीत्। वेदानां व्यासकालात् प्राग् एवेयं पद्धतिर् न केवलं चिरन्तनी बभूव, अपि तु सुव्य-वस्थितां दशाम् अपि भेजे। उपलभ्यमान-धर्म-सूत्राणां समये त्व् इयं पूर्ण-वेगेन प्रवहमानाऽऽसीत्। ब्राह्मण-क्षत्रिय-वैश्य-ब्रह्मचारिण उपनयन-संस्कारा-ऽनन्तरं द्वादश वर्षाणि गुरुकुल एवोषित्वा विद्याऽध्ययनम् अकुर्वन्' इति।

शिक्षा केवलं धर्म-परैव नाऽऽसीत्। शास्त्राऽध्ययनेन समं सर्वेषां वर्णानां व्यवसायोपयोगिनी व्यावहारिकी शिक्षाऽपि दीयते स्म। ब्राह्मण-विद्यार्थिनः प्राधान्येन वेद-शास्त्राऽध्ययने दत्ताऽवधाना बभूवुः, क्षत्रिय-वैश्य-च्छात्रास् तु स्व-स्व-व्यवसाय-संबन्धिनीं शिक्षां लेभिरे। अतो धार्मिक-शिक्षया समं लोक-व्यवहार-पाठशाला अपि समुदभवन्।

इयं शिक्षा-पद्धतिः परम्परया युगाद् युगान्तरम् अवतरन्ती सर्वस्मिन् देशे प्रसृताऽभूत्। पुस्तकालयानां दाहकाः, विश्वविद्यालयानाम् अन्येषां च विद्या-केन्द्राणां विध्वंसकाः केचन मोहमदीया आततायिनोऽप्य् एनां नाशयितुं नाऽलं बभूवुः। परम् अन्ते, आङ्गल-शासन-प्रसाराद् ऊर्ध्वं य आघातोऽनया सोढस् तेनाऽस्या मूलं शिथिल-प्रायं संजातम्। तद् एतद् ब्रिटिश-नीतिज्ञानां कूट-नीतेर् एव फलम्।

श्री-की-महोदयेनाऽन्यत्र लिख्यते—'ब्राह्मणानां शिक्षा 'विद्या-पुनरुद्धार' (Revival of Learning)-युगात् प्राक्तन्या यूरोपीय-शिक्षायाः केनाऽपि

प्रकारेण नाहीयत। ब्राह्मणाऽऽचार्यैर् न केवलम् ईदृशी शिक्षा-पद्धतिर् आविष्कृता या नाना राज्य-विध्वंसान् समाज-विप्लवांश् चाऽत्यजीवत्, अपितु तैर् वर्ष-सहस्राणि यावद् उच्च-विद्या-प्रदीपोऽपि निर्वाणाद् निरन्तरं रक्षितः, ईदृशो महामनीषिणश् चोत्पादिता येषां विचार-गाम्भीर्येण न केवलं स्व-देशीयं वाङ्मयं, किन्तु विश्वस्य दर्शनम् अपि प्रभावितम् अभूद् इति।

ब्रिटिश-शासनात् पूर्वं भारते महान् विद्या-प्रसार आसीत्। न पुनर् द्वि-त्रेष्व् एव प्रदेशेषु, अपितु सर्वस्मिन्न् एव देशेऽभून् न्यूनाऽधिकः शिक्षा-विस्तरः। १८३५-तमे ख्रिष्टाब्दे वङ्गेष्व् एव केवलं लक्ष-कल्पा आसन् पाठशालाश् चतुष्पाठ्यश् चेत्य् आसीच् छ्रीमद्-आदम (Adam)-महोदयानाम् अनुमानम्। अथ च सर-टामस-मुन्रो-महोदयानाम् अनुसंधानाऽनुसारं १८२२ तमे खिस्ताब्दे मद्रास-संस्थाने १२४९८ पाठशाला आसन्, यासु १८८६५० छात्राः शिक्षां प्राप्नुवन्।

अनेन स्पष्टम् एव ज्ञायते यद् आङ्गलानाम् आगमनात् पूर्वं कियान् आसीद् विद्या-विस्तरः। तक्षशिला-नालन्दा-विश्वविद्यालययोश् चतुर्दिग्भ्यश् छात्रा विद्योपार्जनार्थं विद्वांसश् च ज्ञानाऽवाप्त्यर्थं समागच्छन्। नालन्दा-विश्वविद्यालये तु दश-सहस्राण्य् आसन्न् अन्तेवासिनोऽध्येतारः।

राजनीतिक-स्वार्थ-परैर् ब्रिटिश-शासकैः प्राचीना शिक्षा-पद्धतिस् तत्प्रवर्तिन्यः पाठशालाश् च स्व-कूट-नीत्या कृशीकृत्य क्रमेण विनाशिता इत्य् अत्राऽनेकानि प्रमाणानीतिहास-लेख्येषूपलभ्यन्ते। भारतीया प्राचीन-शिक्षा-पद्धतिर् ब्रिटिश-राज्य-स्थैर्याय न हित-करीत्य् आसीत् सर-चार्लस-ट्रेविलियन इत्य् अस्य मतम्। तदनन्तरं लार्ड-मेकाले इति नाम्ना तस्यैव प्रथित-यशसा बन्धुनोक्तं, 'भारते शासक-शासितयोर् आशयम् अन्योन्यं प्रति विशदीकर्तुं द्वै-भाषिकाणाम् अस्त्य् अपेक्षाऽसम्भ्यम्।···अस्माभिर् एक ईदृशः पठितवर्ग उत्पादयितव्यो यो रुधिरेण वर्णेन च भारतीयः सन्न् अपि आचारे व्यवहारे मन्तव्येऽभिरुचौ, विचार-विवेचनादिषु च सर्वथाऽऽङ्गलः स्यात्' इति। नास्त्य् अत्र लेश-मात्रम् अपि संदेहो यद् भूत-पूर्वाणाम् आङ्गल-प्रभूणां कृपया तादृशो 'बाबू'-वर्गः समुदपद्यत, यः स्वतन्त्रताऽवाप्त्यनन्तरम् अद्याऽपि अधिकाररूढो विराजते। असाव् एव वर्गः साम्प्रतं भारत-सभ्यतायाः संस्कृत-संस्कृतेश् च घोर-द्वेषी तदभ्युदय-मार्गे च प्रत्यूहस् तिष्ठति। स आङ्गल-विद्या-लव-दुर्विदग्धोऽन्यान् अनाङ्गल-ज्ञान् अ-पठितान् असभ्यांश् च मन्यते। तस्य स्वार्थम् उत्तरोत्तराऽभ्युदयश् चाऽऽङ्गल-भाषया सम्पूर्णतया सुखेन सम्पद्यते, अतः किं

तस्य राष्ट्रिय-शिक्षया संस्कृत्या वा ? के वा शिक्षायाः कर्णधारा इति किम् अनेन तस्य प्रयोजनम् ? अनात्मज्ञोऽसाव् अस्यां लाघव-कारिण्याम् अयशस्कर्यां स्थितौ वर्तमानोऽपि मोदते हंस-पक्ष-धरः काक इव ।

**संस्कृतोद्धार-प्रसारोपायाः—**

१. राष्ट्रिय-शिक्षायाः प्राथमिकम् उद्देश्यम् इदम् एव भवितुम् अर्हति यद् अनया सर्वे देश-वासिन ऐक्य-सूत्रे प्रोता धर्मं चरन्तः परस्परम् अद्विषन्तो जीवन-यात्रां सुखेन यापयितुं समर्था भवेयुः, साहाय्य-दानेनान्यांश् च प्राणिनः सुखिनो विधातुं शक्ताः स्युर् इति। सुखेन जीवन-यात्रां निर्वाहयितुं प्रथमत उदर-पूरणार्थम् अन्नम्, अथ च शरीराच्छादनार्थं वस्त्रं, निवासार्थं गृहं, रोग-निवारणार्थम् औषधं, विश्राम-विनोदार्थम् अवकाशः, कलात्मकाभिरुचि-तृप्त्यर्थं कानिचित् साधनान्य् अपेक्ष्यन्ते । एतानि तावन् न्यूनतयाऽऽवश्यकानि । यस्मिन् राष्ट्रे प्रजाः शरीरवृत्तिम् अपि कर्तुं नाऽलं तत् तु जगति भार-मात्रम् एव ।

अतः संस्कृत-शिक्षां प्रथमतः प्रजाभ्योऽर्थकरीं विधातुं सुतरां प्रयतितव्यम् ।

२. पुरा किलाचार्या विद्या-दानं स्व-धर्म इति मत्वा विद्यार्थिनः पाठयामासुर्, न तु धन-लोभेन । शुल्क-ग्रहणं तु तेषां प्रतिषिद्धम् आसीत् । क्व तत् कृत-युगं क्व चाऽद्यतनं प्रवृद्धं कलियुगं यस्मिन् राष्ट्रस्य बहव उच्चाधिकारिणोऽपि कलुषित-कर्म-प्राया येन केनाप्य् उपायेन प्रभूतं धनं संचिन्वन्तो मद्य-मांसाऽऽदि-भोगान् सेवमाना निर्धनान् अवहेलयन्तो विराजन्ते । 'यथा राजा तथा प्रजाः' इत्याभाणकाऽनुसारं प्रजा अपि उन्मार्ग-गामिन्यो नानाऽनाचारान् आचरन्त्यः पाप-पङ्के निमग्ना लोलोक्यन्ते । ईदृश्यां दुरवस्थायां केवलं निर्धना वराकाः संस्कृतज्ञा आचार्योपाध्याया एव त्यागिनः स्युर् इति कथं संभाव्यते ?

अत एवाल्प-वृत्तीनां संस्कृताऽऽचार्योपाध्यायानां वेतन-वृद्ध्याऽन्यैश् चोपायैर् उद्धारः कर्तव्यः ।

३. राष्ट्रिय-शिक्षैव राष्ट्रस्य सर्वाऽतिशायिन्य् आवश्यकता, तदर्थं च प्रभूतं धनम् अपेक्ष्यते । अतो राष्ट्र-कोषाद् वा, नूतन-कराऽऽदानेन वा, अन्येभ्यो राज्य-विभागेभ्योऽल्प-व्ययेन संचित्य वा, ऋणान्य् उत्थाप्य वा—अर्थाद् येन केनाप्य् उपायेन राष्ट्र-धुरीणा धनं संगृह्य विद्याप्रसारार्थम् उपकल्पयेयुः ।

अन्यच् च, प्रजानां दानेभ्यो देवालयानां चाऽऽय-कोषेभ्यो धनं संकलय्य संस्कृत-संस्कृति-शिक्षार्थं प्रयोक्तुं शक्यम् । देवालयेषु च पूर्ववत् संस्कृत-पाठशाला अधिकाधिकं स्थापयितव्याः ।

४. पाठशाला-विद्यालयेषु च आ प्राथमिक-कक्षायाः संस्कृत-शिक्षाऽऽवश्यिकी क्रियेत, महाविद्यालयेषु च जनता-सेवा-प्रतियोगिता-परीक्षासु ( in Public Service Competitive Examinations ) च यथासंभवम् । एवं कृते संस्कृतोन्नतिर् अनायासेनैव भवेत् ।

५. संस्कृत-भाषा कृच्छ्र-साध्येति सर्व-साधारणस्य धारणा । क्लिष्टाः सन्धयो, धातूनां दश गणाः, दश लकाराः, आत्मनेपद-परस्मैपद-प्रत्ययास् त्रीणि लिङ्ग-वचनानि, सुबन्तानां च रूप-बाहुल्यम् इति सर्वोऽप्य् अयं प्रपञ्चः संस्कृतच्छात्रं भीषयितुम् अलम् । अतो विद्वद्भिः पुनः पुनर् विमृश्य केचिद् उपायाश् चिन्तयितव्या यैर् भाषायाः स्वरूपं मूल-तत्त्वं चाऽबाधित्वा सामयिकीम् आवश्यकतां चोपलक्ष्यान्वय-व्यतिरेकाभ्याम् आगम-विपर्यय-विलोपनादिभिः संस्कृतं सरली-क्रियेत ।

६. संस्कृत-विद्वांसो लेखकाश् च वेतन-वृत्ति-पारितोषिकादिभिः प्रोत्साहयितव्याः ।

७. अखिलेऽपि देशे स्थाने-स्थाने गुरुकुलानि स्थापयित्वा तेषु केवलम् अन्तेवासिनो ब्रह्मचारिणः प्रवेशयितव्या नेतरे । तेभ्यः प्राक्तनीं पद्धतिम् अनुसृत्य शिक्षा प्रदातव्या, परं तस्यां पद्धताव् आधुनिक-मनोवैज्ञानिकाऽनुसन्धानाऽनुरूपम् आलोचनात्मकाऽध्ययन-विधिं सामयिकीः प्राविधिक-वैज्ञानिकावश्यकताश् चोद्दिश्य यथोचितानि परिवर्तनानि कर्तव्यानि ।

८. बालोपयोगीनि सचित्राणि प्राथमिक-पाठ्य-पुस्तकानि, गद्य-पद्य-संग्रहान्, पुराणेतिहासादिभ्य उद्धृत्य संक्षिप्ता रुचिराः कथाः, इत्य् एवं-विधं नव-नवं वाङ्-मयम् उत्पाद्यम् । तत् तु सरलं, वाग्व्यवहाराऽनुरूपं सर्वतोमुखि-ज्ञान-प्रदं, मनोहरैश् चित्रैश् चाऽलंकृतं स्यात् ।

९. आकाश-वाण्याः प्रचारकैश् च संस्कृत-पठन-पाठन-क्रमः प्रसारयितव्यः । पञ्च-शतानि संस्कृत-विद्वांसः संस्कृत-प्रचारार्थं बद्ध-परिकरा भूत्वा सर्वम् इमं देशं विद्याऽमृतेनाऽऽप्लावयेयुः, देश-वासिनं च प्रत्येकं संस्कृतं पाठयेयुः । संस्कृत-सप्ताहाः, संस्कृत-पर्वाणि, संस्कृत-शिविराणि च काले-काले सर्वत्राऽऽयोजयितव्यानि । तेषु विंशतिः, पञ्चाशत्, शतं वा जनाः संभूय संस्कृत-भाषयैव सर्वं व्यापारं संपादयेयुः । सर्व-साधारण-हितार्थं चल-पुस्त-

कालया अपि प्रवर्तयितव्याः । सर्वोऽयं प्रयासो राजकीय-शिक्षा-मन्त्रालयेन कर्तव्यः ।

१०. संस्कृत-परिषदोऽन्याश् च संस्कृतोद्धार-संस्थाः स्वं स्वं कार्य-जातं संस्कृतेनैव संपादयेयुः ।

११, दैनिक-समाचार-पत्रेषु संस्कृत-समाचारा निबन्धा वा न्यूनतः स्तम्भैक-मात्रा अवश्यं निवेशयितव्याः ।

१२. संस्कृत-नाटकाभिनय-चलचित्र-प्रदर्शनादिभिर् विनोद-साधनैः संस्कृते जन-रुचिर् उत्पादनीया प्रवर्धनीया च । महाविद्यालयेषु छात्राः संस्कृत-वाद-विवाद-शास्त्रार्थ-प्रतियोगिताभ्यः पारितोषिकादिभिः प्रोत्साहनीयाः ।

१३. राष्ट्रस्य, विशेषतः शिक्षा-विभागस्य, मन्त्रिणः संस्कृतज्ञाः स्युः, अथवा संस्कृतम् अजानन्तस् तत् पठेयुर् येन तेऽस्मिन् निहिताज् ज्ञानात् प्रेरणां लब्ध्वा संस्कृत-वाङ्मयस्याऽभिवृद्धये प्रसाराय चौत्सुक्येन प्रयत्न-शीला भवेयुर् इति ।

---

( १५१ पृष्ठस्य शेषः )

दण्डिनो गद्यं सुबन्धोर् इव 'प्रत्यक्षर-श्लेषमय-प्रबन्ध-विन्यासवैदग्ध्य'-दग्धं नाऽस्ति, न चाऽपि बाणस्येव नैकविशेषण-दीर्घ-समास-निरन्तरानुबद्ध-वाक्य-परंपरा-भाराक्रान्तं वर्तते । तदीयं तु गद्यं विरलम् एव श्लेषाऽश्लिष्टं, क्वचिद् एव च विशेषण-समास-सङ्कुलं दृश्यते । गद्य-जीवित-रूपं समास-भूयस्त्वं[1] तु तस्य गद्ये परिलक्ष्यते, परं लघूनाम् एव समासानां तत्रोपस्थितिर् वर्तते, तेषां च नैव बाहुल्यं, न चाप्य् अल्पत्वम् अस्ति, अपित्व् अनयोर् मिश्रणं वर्तते । गुरूणां समासानां प्रयोगस् तु प्रायेण नास्त्य् एव । तद्यथा—

१. कृतकरणीयः किरण-जाल-कराल-रत्न-राजि-राजित-राजार्हासनाध्यासी यथासदृशाचारदर्शिनः शङ्कायन्त्रिताज्ञान् संनिधिनिषादिनः सहायानगादिषम्[2] ।

२. स एवायमव्याजजयार्जितोर्जितप्रभावः प्रभावावधूतवैवस्वतवरुणवज्र-हस्तराजराजो राजा राजसिंहः[3] ।

अतो यथार्थां खल्व् इयम् उक्तिर् 'दण्डिनः पदलालित्यम्' इति ।

---

१. काव्य० १,८०-१ ।　२. दश० पृ० २५० ।　३. अव० पृ० १३१ ।

# योगस्योपयोगिता-विमर्शः

*श्रीकृष्णमणित्रिपाठी

वैज्ञानिका इव योगिनोऽपि समाजस्य उन्नायका भवन्ति । यथा वैज्ञानिकाः स्व-प्रयोग-शालायां तन्मयतापूर्वकं विविध-प्रयोग-परीक्षणाऽनन्तरं समाजस्य समक्षे विविधं कल्याण-कारिणम् आविष्कारम् उपस्थापयन्ति तथैव योगिनोऽपि स्व-प्रयोग-शालायां स्वस्थान् दृढान् बलिष्ठान् कार्य-कुशलान् सर्व-कला-प्रवीणान् नागरिकान् निर्माय राष्ट्रस्य समाजस्य च महान्तम् उपकारं कुर्वन्ति । वैज्ञानिकानां प्रयोगाः कदाचिद् अफला समाजस्य राष्ट्रस्य च हानि-कारका अपि भवितुम् अर्हन्ति परं योगिनां निर्माण-कार्याणि सर्वदा सत्यस्य शिवस्य सुन्दरस्य च प्रतिष्ठापकान्य् एव भवन्तीति नाऽत्र सन्देहः ।

योगिनां वैज्ञानिकानाञ् च चिन्तन-प्रवाह-मार्गः कामं भिन्नो भवेत् परं द्वाव् अपि प्रकृतेः तल-स्पर्शि विवेचनं विधातुं प्रयतेते । द्वाभ्याम् एव जगतः सूक्ष्माणां स्थितीनां स्पर्शं कर्तुं प्रयत्यते । अन्तरं तयोः केवलम् एतावद् एव भवति यद् वैज्ञानिकाः केवलं जगतः स्थूल-शक्तिषु स्वाधिकारं कृत्वा सन्तोषम् अनुभवन्ति किन्तु योगिनो नैतावता तुष्यन्ति, प्रत्युत तेषां योग-चित्त-धारा इतोप्य् अग्रे प्रवहति । योगिनः समाधिस्थाः सन्तो विश्व-वारिधौ विकीर्णानि सिद्धि-रत्नानि संग्रहीतुं प्रभवन्ति । योगिनाम् अन्तर्दृष्टिर् अत्यन्त-सूक्ष्मा भवति । ते स्वयं साधना-सम्भावित-सिद्धि-समृद्धिं सर्वेषां समक्षं समुपस्थापयितुं समर्था भवन्ति । अतो योगिनां कार्य-कौशलं धन्यं यशस्यं वन्द्यं सर्वथा स्पृहणीयं राष्ट्र-निर्माणोपयोगि विश्वोपकारि चाऽस्ति ।

विशालं वैभवं, विपुला विद्या, सुरम्यं स्थानम् अपरिमितं साधनम्, समृद्धं साहित्यम्, सुन्दरं शरीरं, कुशाग्रा बुद्धिः, उर्वरितं मस्तिष्कम्, सूक्ष्मा विवेचन-सरणिः, सर्वम् एतत् स्वास्थ्यं विना निष्फलं भवति । अतोऽनायासेन सम्भावितेन योगाऽभ्यासेन शरीरस्य स्वास्थ्य-लाभायाऽवश्यं प्रयत्नो विधेयः ।

---

*आचार्यः, वाराणसेय-संस्कृत-विश्वविद्यालयः; वाराणसी ।

योगाऽभ्यासाऽर्थं न बाह्यस्य साधनस्याऽऽवश्यकता भवति, नाऽपि विशालस्य भवनस्याऽपेक्षा जायते, न चाऽधिकस्यैश्वर्यस्याऽऽकाङ्क्षाऽस्ति, किन्तु प्रतिदिनं प्रातः सायं यथासम्भवं स्व-भवने पवित्रे एव वातावरणे स्वल्पः समयोऽपेक्ष्यते। प्रातः शारीरस्य बौद्धिकस्य च स्वास्थ्यस्य लाभाय शरीरं सुदृढं बलिष्ठम् नीरोगं मनोहरं च विधातुं योग-दर्शनस्य साधनम् अवश्यम् अनुष्ठेयम्।

योगः शरीरम् नीरोगं बलिष्ठञ्च कुरुते, मानसं च निर्मलं पवित्रं सम्पादयति। योगाऽनुसारं प्राकृतिकं जीवनम् एव दैनिकस्य जीवनस्य क्रमोऽस्ति। योगिनो वनेषु, पुष्प-वाटिकासु, लता-कुञ्जेषु, गोमयादि-लिप्तेषु पवित्रतमेषु गृहेषु, नदी-कूप-सरसां विशुद्ध-जलवायूनां सेवनेन दुग्ध-कन्द-मूल-फलादीनां सदुपयोगेन सन्मार्गाऽनुसरणेन च सूर्य-किरणैः जीवन-तत्त्व-ग्रहण-पूर्वकम् अनायासेन मानसिकं नैरुज्यम् उपलभ्य प्राकृतिकं जीवनं यापयन्ति।

शरीरं व्यवहारार्थस्य परमार्थस्य च मुख्यं साधनम् अस्ति। एतद्-द्वारैवाऽभीष्टस्य वस्तुन उपलब्धे सम्भवोऽस्ति। शुद्धा नाड्यः, विशुद्धं रुधिरम्, बलवान् मज्जा-तन्तुः, सशक्तः क्रिया-तन्तुः, निर्मलं ज्ञानम्, विशुद्धं वीर्यं च मानव-शरीर-स्वास्थ्य-लाभे भवन्ति कारणानि। एतदर्थं योगाभ्यासम् अन्तरा नाऽस्ति किञ्चिद् अन्यद् वास्तविकम् अत्यन्तम् उपयोगि च साधनम्। बाह्य-सौन्दर्याऽपेक्षयाऽऽन्तरिक-सौन्दर्यस्य भवति महत्त्वम्। नियमतो योग-साधनेनाऽन्तरिकं सौन्दर्यं वर्द्धते। अतो योगिनो बाह्य-सौन्दर्य-वर्द्धना-पेक्षयाऽऽभ्यन्तरस्य सौन्दर्यस्य परमोपयोगित्वम् अनुभूयाऽनुभूयाऽनुशीलयन्ति योगाभ्यासम्। यथा भगवतो मूर्तौ मन्दिरे च सौन्दर्यं, रम्यत्वं, सुदृढत्वं स्वच्छत्वं चापेक्षितम् अस्ति तथैव शरीरम् अप्य् आत्म-परमात्मनोर् मन्दिरं मत्वा तस्य निर्मलता-सम्पादनाय प्रयतन्तेऽहर्निशं विवेकिनो योगिनः। अत एवोक्तं पूज्यपाद-भगवच्छंकराचार्यैः सदासारस्तोत्रे—

देहो देवालयः प्रोक्तो देही देवो निरञ्जनः।
अर्चितं सर्वभावेन स्वानुभूत्या विराजते॥

यदि समुचितेन रूपेण परमार्थ-साधनं क्रियेत तर्ह्य् आत्मशरीर एव भगवतो निरञ्जनस्याऽवश्यं दर्शनं संभवेत्। यथा स्वच्छे मल-रहिते दर्पणे शरीरं स्पष्टं प्रतिबिम्बितं भवति, तथैव शरीराऽऽरोग्येण प्रसन्ने मनसि सर्वाः क्रियाः सफला भवन्ति।

अत एव 'योगः कर्मसु कौशलम्' इति यद् उक्तं भगवता श्रीकृष्णेन तदपि

समीचीनं घटते। योगेन कर्म कर्तुं शक्तो भवति मानवः। कर्म च जीवनस्या-ऽस्माकं मूलम्। कर्म विना न क्षणम् अपि स्थातुं शक्यते केनाऽपि। यथोक्तम् अपि गीतायाम्—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
शरीर-मात्राऽपि च ते न प्रसिद्ध्येदकर्मणः।

इत्थं केनाऽप्य् अपाकर्तुं न शक्यते योगस्य महामहिमा।

यथा परिपक्वं पुष्टम् उत्कृष्टं च बीजम् उर्वरित-क्षेत्र-सूर्यप्रकाश-शुद्धवायु-निर्दोष-जल-विमलाऽऽकाशादीनाम् उचित-व्यवस्थाया अभावे न प्ररोह-समर्थं भवति तथैव केवलेनाऽऽसनाभ्यासेन पर्याप्तो लाभो भवितुं नार्हति, किन्तु तदर्थं विशुद्धस्य वायोः, सात्त्विकस्य भोजनस्य, रोगाऽपनुद्-जीवन-तत्त्वानां, योगाऽङ्गानां च सेवनम् अप्य् अत्यन्तम् आवश्यकम्। दुर्व्यसनानां त्यागोऽश्लील-साहित्यस्याऽध्ययनादेर् विरतिः, अनीति-मूलक-कुकर्म-परिवर्जनम्, चल-चित्रादि-बीभत्स-दर्शन-वैरस्यम् अपि साधनस्य कृतेऽत्यावश्यकत्वेनाऽपेक्षितम् अस्ति।

योगाऽभ्यासस्याऽनुष्ठानेन शरीरे उत्तरोत्तरम् उत्कर्ष आविर्भवति, सर्वाङ्गेषु सामर्थ्यम् आरोग्यतायाः सञ्चारश् च जायते, बुद्धौ विचार-वैशद्यं, मनसि शान्तिः, चित्तस्य चाञ्चल्य-निवृत्तिश् च प्रादुर्भवति। जीवनेऽभिनवा शक्तिः, नवीना स्फूर्तिः, अपूर्वस्य तेजस आविर्भावश् च योगसाधनस्य फलम्। योगा-भ्यासेऽचिन्त्या शक्तिः, अगाधं गाम्भीर्यम्, अद्भुतं रहस्यं च प्रच्छन्नम् अस्ति।

शास्त्रेषु सन्त्य् एतादृशि बहूनि वर्णनानि येषु पुरुषैर् योग-द्वारा कृतानाम् अद्भुत-कार्याणां वर्णनं प्राप्यते।

न केवलम् एतावद् एवाऽपितु साधको योग-साधन-द्वारा विषयेभ्य इन्द्रियाणि प्रत्याहृत्य मनसि तच्चात्मनि विधाय शरीराभ्यन्तरे एव ज्ञान-गम्यम् आत्मानं द्रष्टुं शक्नोति, अगम्यं ब्रह्मणो लोकं चाऽप्य् अधिगन्तुं पारयति। उक्तम् अपि मतङ्गेन ऋषिणा—

अग्निष्टोमादिकान् सर्वान् विहाय द्विजसत्तम।
योगाभ्यासरतः शान्तः परं ब्रह्माधिगच्छति॥

अयं संसार-विषविषूचिकावेगो महान् दुःसहोऽस्ति सोऽपि योग-रूप-गरुडमन्त्रेणैव शाम्यति नाऽन्यथा।

दुःसहा राम ! संसारविषवेगा विसूचिका ।
योग-गारुड-मन्त्रेण पवनेनोपशाम्यति ॥[१]

विवेकचूडामणौ भगवान् शंकराचार्योऽपि प्रोक्तवान् यद् ये पुरुषा घट-पटादि बाह्यं प्रपञ्चं, श्रोत्रादीन्द्रियं चित्तम् अहम् इत्य् आभ्यन्तरं च चिदात्मनि साक्षिणि प्रविलाप्य समाधिस्था भवन्ति त एव जन्म-मरणाऽऽत्मकैर् बन्धनैर् विमुच्यन्ते—

समाहिता ये प्रविलाप्य बाह्यं श्रोत्रादिचेतस्स्वहमं चिदात्मनि ।
त एव मुक्ता भवपाशबन्धनैर्नान्ये तु पारोक्ष्य-कथाभिधायिनः ॥[२]

एवं योगबीजे पार्वती-महादेव-संवादे भगवती पार्वती भगवन्तं सदा-शिवम् अप्राक्षीत्, भगवन् ! यदि केवलेन ज्ञानेन मोक्ष-प्राप्तिः सम्भवति तर्हि योग एव मोक्षद इति ज्ञानिनां मतं कथंकारं संगच्छते । तद्-उत्तरे एवम् अवादीत् भगवान् शंकरः— यद्यपि ज्ञानेन मोक्षो भवति नान्येन साधनेनेति ज्ञानिनां कथनं सत्यम् अस्ति, तथाऽपि खड्गेनैव शत्रु-पराजयो भवतीत्य् अस्य सत्यत्वेऽपि किं युद्धेन वीर्येण विना शत्रु-पराजयः सम्भवति । तथैव योगं विना केवलेन ज्ञानेन मोक्ष-प्राप्तिर् न सम्भवति । किञ्च ज्ञान-निष्ठो विरक्तो धर्मज्ञो जितेन्द्रियोऽपि देवो योगेन विना मोक्षं न लभते—

ज्ञाननिष्ठो विरक्तोऽपि धर्मज्ञोऽपि जितेन्द्रियः ।
विना योगेन देवोऽपि न मोक्षं लभते प्रिये ॥[३]

योगतत्त्वोपनिषद् अपि—

योगो हि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।
तस्माद् ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥

भारतवर्षे पूर्वत एव चिन्तन-शील-व्यक्तिभिर् आत्म-तत्त्वस्याऽनुसन्धानं क्रियते । साधन-सम्पन्ना योगिनो योग-बलेनाऽन्तःकरणानां बाह्येन्द्रियाणां च समुत्कर्षं संसाध्याऽऽत्म-तत्त्वं ज्ञातुं प्रभवन्ति । लौकिक-प्रत्यक्ष-द्वारा सत्यस्या-ऽऽत्म-तत्त्वस्य संपादनं साक्षात्कारो वा न संभवतीत्य् अतः समाधेर् अभ्यासो विविध-साधन-प्रणालीनाम् अनुशीलनं चाऽत्यन्तम् अस्त्य् आवश्यकम् ।

---

१. योगवासिष्ठः, ३,५,२७ । २. विवेकचूडामणिः, ५,७ ।
३. योगबीजम् १ २४ ।

यम-नियमाऽऽसनप्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिभिर् अन्तःकरणस्य शुद्धौ सत्याम् एव चिद्दर्पणे आत्मनो विम्बः प्रतिफलति । अतो योग-साधन-द्वारा अन्तःकरणस्य शुद्धिः परमाऽऽवश्यकीति योगविदां मतम् ।

श्रवण-मनन-निदिध्यासनानि त्रीण्य् एव साधनानि साधारणतया भारतीय-दर्शनेष्व् आत्म-दर्शनस्य कारणानि सन्ति । तथा चोक्तम्—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥

न्यायकुसुमाञ्जलाव् उदयनाचार्येणाऽपि श्रवणानन्तरम् एव दार्शनिकालोचनायाः स्थानं स्थिरीकृतम् अस्ति—

पदचर्येयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

योगिभिर् योगबलेन मनः स्थिरीकृत्य देहाभ्यन्तरे कुत्र किम् अस्तीति सम्यग् ज्ञात्वा मानसिकीनाम् अवस्थानां विचार आरभ्यते । लौकिकैर् जनैश् च योग-साधन-द्वारा शरीरं स्वस्थं विधाय स्व-कर्तव्य-कर्म सम्पादयद्भिर् देशस्य राष्ट्रस्य च रक्षोचित-समाजस्य निर्माणं सत्साहित्यस्य च सर्जनं विधेयम् इत्य् उभयथैव योगस्योपयोगिता । सम्प्रति तु व्यवहार-दृष्ट्याऽतीवाऽऽवश्यकताऽस्ति तस्य करालेऽस्मिन् राष्ट्र-संकट-काले । तेन स्वकीयं शरीरम् इन्द्रियाणि मनो बुद्धिं वा संपोष्य वयं शत्रुभिः प्रदत्तं संकटम् अपाकर्तुं समर्था भवेम इति ।

---

# सोऽयं सतां संस्तवः

*श्यामदेवपाराशरः

अकिञ्चनायापि समृद्धिदात्रे,
पात्रेऽप्यपात्रे करुणाकराय ।
भूयासुराकाशसदां वराय,
नमांसि भूयांसि दिगम्बराय ॥१॥

द्वेषणदलदारणदक्षाणां, कृतकुलमर्यादारक्षाणाम् ।
रणदिवसेष्वपि रममाणानां, हुङ्कारैर् हृतपरप्राणानाम् ॥२॥

युद्धाय सदा सन्नद्धानां, क्रुद्धानामपि हृदि शुद्धानाम् ।
उच्चावचास्त्रसहितैरहितैर्, नो बद्धानां नो रुद्धानाम् ॥३॥

आपत्स्वपि च स्मयमानानां, पुरुपौरुषपालितमानानाम् ।
स्वप्नेऽपि न दर्शितदैन्यानां, तेजसा प्रसाधितसैन्यानाम् ॥४॥

मरणाय रणेऽहम्पूर्विकया, सर्वथा साध्वसैर् हीनानाम् ।
युद्धाह्वानं श्रुत्वारीणाम्, आहोपुरुषिकया पीनानाम् ॥५॥

स्थैर्यं धैर्यं शौर्यं क्रौर्यं, येषां धीराणां वीराणाम् ।
गायन्ति च गौरवगाथासु, दृप्यन्ति जगन्ति न तृप्यन्ति ॥६॥

देशे दर्शितदृढभक्तीनां, प्रधनेषु परीक्षितशक्तीनाम् ।
जङ्गमभुवविक्रमरूपाणाम्, आकारैर् वज्रस्तूपानाम् ॥७॥

झञ्झावातैरिव सङ्घातैः, तरसान्दोलितरिपुदेशानाम् ।
भीमरणारण्ये सिंहानां, क्ष्वेडान्तकमरणादेशानाम् ॥८॥

पञ्चत्वं क्रीडनकं मत्वा, प्रेतपटैः परिहितमस्तानाम् ।
रिपुरमणीनां सौभाग्यस्य, द्राक् प्रोञ्छनपेशलहस्तानाम् ॥९॥

---

*शास्त्री, एम.ए. एम.ओ.एल्; प्राध्यापकः; राजकीय-कालेजः; होशि-आरपुरम् ।

स्वातन्त्र्योपवनावनहेतोर्, विषमुखशितकण्टकवारीणाम्।
स्फूर्जथुसंवादैर् जयनादैर्, युधि कम्पितभयभग्नारीणाम् ॥१०॥

परिपन्थिमथनचण्डांशूनां गिरिगौरवशालप्रांशूनाम्।
सर्वथा सर्वदा जैत्राणां, मृत्योर् महितानां मित्राणाम् ॥११॥

रण उत्सव इव सोल्लासानां, तुमुले संशप्तकभीमानाम्।
क्रूरतरकठोरकपट-विकट-वक्षःस्थलवलयितसीमानाम् ॥१२॥

येषां चाहमहमिकानादाः, सिंहानां श्रूयन्ते त्रस्तैः।
रहसि स्तब्धाक्षैः किं ध्याने, नाद्याप्यरिभिः शिथिलितहस्तैः ॥१३॥

बहुविग्रहविजयवधूवरणव्रणवीथीबद्धकिरीटानाम्।
ये जानतेऽरिजालमांस्तुल्यं, तृणतुच्छतूलकृमिकीटानाम् ॥१४॥

उद्दण्डचण्डताण्डवमण्डल-श्रुतवीरपानमदगीतानाम्।
हेलया खेलतां प्राणैरपि युधि प्रीतानां नो भीतानाम् ॥१५॥

येषां चरणैर् वेपते धरा, गगनं जिनदैस्तरवारीणाम्।
शौर्यैः शत्रूणां चेतांस्यथ सौभाग्यं तेषां नारीणाम् ॥१६॥

तेषां व्यायामस्वेदभरैरुर्वरिते वरविक्रान्तानाम्।
लिप्तेऽजस्रास्रभरैः सिक्ते, द्विषतां शतशोऽपि सकान्तानाम् ॥१७॥

पञ्चाम्बुनाम्ना प्रथिते प्रदेशे,
शिवालकाख्यस्य गिरेः सदेशे।
तपोधनानां निधनं निधानं,
तदस्ति 'होश्यारपुरा'भिधानम् ॥१८॥

सदर्चिताचार्यसचर्चिकानां,
पूतं परं पादपयोजपांसुभिः।
'साध्वाश्रमा'ख्यं श्रुतिशास्त्र-शोध-
संस्थानम् अत्रास्ति च विश्रुतं तत् ॥१९॥

प्रसाधितैः सान्द्रसुधासुधौतैर्,
व्याप्तं शतैः शान्त-निशान्तजालैः।
माद्यच्चकोरासु निशासु हेलया,
मुष्णात्यदः वैबुधपत्तनप्रभाम् ॥२०॥

निकषा तोरणं तत्र यत्र कार्यालयः स्थितः।
प्रायो यो ग्राहकाभावात् शून्यो दीनकुटीरवत् ॥२१॥

मक्षिकामशकाञ्जिघ्नन् जृम्भमाणोऽन्तरान्तरा।
स्वस्तिकाकृतबाहुश्च तस्याध्यक्षो निरीक्ष्यते ॥२२॥

स प्रोषित इव प्रायः स्तब्धमुन्मीलितेक्षणः।
ग्राहकागमनद्वारं वारं वारं प्रतीक्षते ॥२३॥

क्रियावानपि कार्यस्याभावात्तुन्दपरिमृजः।
सोऽलङ्कर्मीणतां हन्त ! तपस्वी क्व प्रदर्शयेत् ॥२४॥

जातः परिसरारामे मर्मरो वाऽध्वनि ध्वनिः।
क्षुद्रो मुद्रास्वनो वास्य हन्ति नीरवताव्रतम् ॥२५॥

उल्लङ्घ्य विंशतिपदानि च दक्षिणेऽत्र,
यालोक्यतेऽरुणविशालकपाटमुद्रा ।
सा मन्द-मन्द्र-मुदिरध्वनिपूरगर्भा,
गीता गुणैर् जगति 'मुद्रणयन्त्रशाला' ॥२६॥

अस्यां विष्वक् पर्यटन्तः प्रभूता,
गोलाङ्गूलश्यामलास्या विभान्ति ।
अभ्यस्यन्तो भैरवीचक्रनाट्यं,
रौद्रै रूपैर् लीलया कर्मशीलाः ॥२७॥

सोल्लासमेते दिवसावसाने,
मलीमसं वेषमलं दधानाः।
तरस्विनो राजपथे जयन्ति,
वातोद्धतान् मेचकमेघखण्डान् ॥२८॥

मन्त्रालयस्योपरि दृश्यमाना,
कृता विलासाय न चन्द्रशाला।
सा भाति शिष्यैर् विदुरैर् भविष्णुभि-
रुन्नादिता 'संस्कृतपाठशाला' ॥२९॥

# चीन-सैन्याऽभिसारः

अमरनाथशास्त्री*

१९६२ तमे ईसवीये संवत्सरे, मित्र-द्रोहं विगणयद् चीन-राष्ट्रम् अकारणम् त्रिविष्टप-(तिब्बत) नेदिष्ठं भारत-प्रदेशं सैन्य-क्रीडा-प्राङ्गणम् इव स्वराष्ट्राङ्कं विधायाऽपि निस्त्रपं पुनरपि नेफा-प्रदेशं प्रदेशिनीसंकेताऽभिक्रोशम् अह्लाया-ऽभ्यक्रामत्, पराजेष्यमाणं च श्रान्तक्लान्तम् इव च सहसा स्वयम् एवाऽवधीरिता-ऽभिसारं विश्वराष्ट्र-कृत-न्यक्कार-धिक्कारं व्यरमद् इति प्रहेलिकाऽद्याऽपि समाधानम् इच्छति। भारतीय-राष्ट्र-शासितृ-मूर्धन्यानां चीनाऽभिसारोऽतर्कितो-पनत आहोस्विद् विदितचरः, चीनराष्ट्र-नायकानां माउसोतुङ्ग-चाउएनलाई-प्रमुखानाम् अस्मिन् मित्रद्रोहे का नामाऽऽसीत् पृष्ठ-भूमिः, चीनराष्ट्र-समृद्धये किं तेषां निर्दयं हृदयम् इतीमे प्रश्ना दुखगमा अपि प्रति-नेदिष्ठ-राष्ट्रम् अवश्यवेदनीयाश् चेति नाऽविदितं विदतां प्रेक्षावताम् इति।

माउसोतुङ्गश् चाउएनलाई-परामर्शेन कथं कया विधया चीन-राष्ट्र नेदिष्ठ-राष्ट्राणां कृते भयंकरं निर्मित्सति, परमाणु-शस्त्र-साहाय्येनाऽपि राष्ट्रा-न्तराणि स्वाङ्गुलिनर्तीनि विधित्सतीति तदीयं दुर्हृदयम् अनेन दुरभिलषितेन व्यज्यते— अत्याहितम् अत्याहितं खलु। परमापदाम् आस्पदं नः चीन-राष्ट्रम्। अहो चीन-राष्ट्रस्य महद् भयम् उपस्थितम्। यत्रकुत्रचित् पश्यामि प्रकृतेर् अभिशापः—दुर्भिक्षम्, अतिवृष्टिर्, अवृष्टिः, शलभाऽऽतङ्को रङ्क-जन-क्रन्दनं चेति। दैनन्दिनैर् दीन-जन-क्रन्दनैर् अश्रुमतीव चीनराष्ट्र-वसुमती प्रतिभाति। मादृशां राष्ट्र-नायकानां चर्या दुश्चरा। जीवनं कण्टकाकीर्णम्। उपर्युपरि तप्त-शलाका-शय्यां शयनम्। एतावता चेतो-ग्लपितेन किं, कर्तव्यो यत्नः, अवश्यं प्रतिविधातव्यम्। अस्तु, अतिविषमाम् अतर्कितोपनतां विद्यमानां चीन-राष्ट्र-समस्याम् इमां समाधातुं प्रधान-मन्त्रिणश् चाउएनलाई-महाभागा एव तावद् मन्त्रणीयाः।

---

* व्याकरणाचार्यः, विश्वेश्वरानन्द-संस्थानम्, होशि-आरपुरम्।

चाउएनलाइना संवदमानो माउसोतुङ्गः साकल्येन विकृतां राष्ट्र-समस्यां चित्रिताम् इव चिकीर्षन्न् आह— अति कृच्छ्रं नो राष्ट्रं श्वसिति। अद्यैव पञ्चलक्षाधिक-जन-संमर्देन मर्दितः खलु मम प्रासाद-परिसरः। 'अन्नं देहि वाऽऽसन्दीं जहीहि वा' इति दारुणाऽभिक्रोश-घोषाऽऽम्रेडनेन कर्ण-शष्कुली व्याकुलिता। अवितथम् इदं यच् चीन-राष्ट्रम् अहरहः पिपतिषति, अत एव नाऽभ्युदेति। अन्नाऽभावः, उद्योगाऽनारम्भः, आरब्धानाम् अपि मध्ये विच्छेदः, राष्ट्र-संपदां क्षयः, स्वल्पान्य् आय-स्रोतांसि, तान्य् अपि प्रति-संस्कर्तव्यानि, व्ययस्य तु कथा न शक्या वर्णयितुम्। भूमि-सलिल-व्योम्नाम् एकैकस्मिन् सैन्यसंनाहे समग्रस्याऽपि राष्ट्रियस्याऽऽयस्य पादोनांऽशो व्ययी-भवति, अवशिष्टेन पादेनाऽयं महान् देशः कथं जीवेत्। जन-संख्याऽपि सुरसेवाऽनुसमं वरीवृधीति। सप्ततिकोटिदेश्याऽल्पीयसाऽनेहसा संभाविता। नैवोदरपूरं भुञ्ज्महे। दर्दुर-सरीसृपाऽऽदि-भक्षणैः पिशाचीं क्षुधं कथम् अप्य् अपनिनीषन्ति चीन-युवानः। एवं-विधे विषमे विधौ मा कर्हिचिद् राष्ट्र-विप्लवो जनीति चिन्तयितव्यः स्वजीवातवे कश्चन स्थायुकः प्रजवी प्रयत्नः। राष्ट्र-समृद्धि-योजना चाऽऽविकल्येन भूयोऽवगाह्या। आपित्समानाश् च विपदो दूरदृशा प्रागेव निभालनीयाः, पालनीयाश् च राष्ट्र-संपदः। मित्रा-ऽमित्र-समीक्षाऽपि समये कार्या। अनुक्षणं सावधानैः प्रतिपन्थिनो राष्ट्रस्य न विगणयितव्याः, चार-प्रचारैः रिपु-सपक्षाया मक्षाया अपि संप्रेक्ष्या गतिः।

उदीच्यां न प्रति-संधेयम् अस्माकं रूस-राष्ट्रं प्रबलः शत्रुः। कोसि-जिनाऽधिपत्येऽनुक्षणं साम्यवादित्व-सामञ्जस्येऽपि विषकुम्भं पयोमुखं तद् राष्ट्रं समूलकाषं कषतीव नो हितम्। विपाक्त-शल्याऽग्रैर् विध्यतीव नो हृदयम्। किं बहुना, तदीयेनैकैकेन प्रतीपाऽऽचरणेन स्वाभिमान एव नः संदेह-दोलाम् अधिरोहति। चीन-राष्ट्र-समृद्धये प्रेषिता यावन्तोऽपि दक्षाः शिल्पिनो विशे-षज्ञा वैज्ञानिकाश् च तेन द्वेषाद् एवाऽसमये प्रत्यावर्तिताः, संप्रति निष्फला-यते राष्ट्र-प्रगतिः, जर्जरायते उद्योग-तन्त्रं, शिथिलायते च शासनम्। ईति-प्रकोपात् कृषिर् अपि कष्टा। एवम् अवाच्याम् अवाच्यां सोन्मेष-राष्ट्र-समृद्धि-योजनां साफल्येन संचालयन् नः स्पर्धनीयः शत्रुर् भारतराष्ट्रम्। पञ्चशीला-भ्यासनैरन्तर्येण दुर्बलोऽप्य् अन्तरायो महान् अस्माकं समृद्ध-जीवने। वाचालः खलु नेहरुर् एशिया-महाद्वीपस्य नेतृत्वं बलाद् वाचां विगल्पितैर् एवाऽस्मत्त आकुञ्चन्न् इव निष्पन्नाकरोतीव नो हृदयम्। आङ्ग्ला अपि शत्रवो हाङ्काङ्-प्रान्तम् अस्मदीयं बद्ध-पद्मासना अधितिष्ठन्ति। चिन्तयामः कदा एनान्

अपसारयामेति । अस्माकं सलिल-परिसरेऽमेरिकाराष्ट्रम् अपि जलोन्मज्जन-यानैः (पनडुब्बीयानैः) लघ्वैर् विशाल-युद्ध-पोतैश् चाऽनुक्षणं भीषाम् इव जनयद् अन्वाजेकृत्य बलवच् चङ्क्रम्यते । राष्ट्र-द्रुहां चेङ काइशेक-प्रभृतीनाम् अप्य् अलेख्या लेख्या, नेदिष्ठ इव फारमोसाद्वीपेऽमेरिकास्कन्धोपारूढः पर्पिकोऽपि पद्दिक इवाऽऽपद्यते, रङ्कोऽपि राजीयत्य् अरुन्तुदो वराकश् चेङ्काई ।

यदि वयं जोषमास्महे म्रियामहे । यदि जीवितव्यं कर्तव्यम् अवधानम् इति । सूक्ष्मेक्षिकासमीक्षितं नाम सुचिन्तितम् उपायं प्रतिवेदयामि, यदि रोचते श्रीमते तद् यथायथं प्रतिविधीयताम् । स चाऽयम् अभ्युपायः—चीन-साम्राज्य-विस्तारः । नेमम् अन्तरेण राष्ट्रस्य जटिल-जटिला जीवन-मरण-समस्या समाधातुं शक्या । मात्स्यन्यायेन हि दुर्बला बलवतां कवलतां गता इति विधातुर् नियमः । साम्राज्य-वृद्धाव् एव राष्ट्र-समृद्धिं पश्यन्तोऽस्माकं पूर्वे राजानश् चंगेजखां-प्रभृतयः कराल-करवाल-धारासलिल-स्नातान् इव युद्ध-निष्णातान् पार्श्व-देशान् अनेकधाऽचिकीर्षन् । पैतृकं पुत्रा अनुहरन्त इति चिरन्तनो नयः । पूर्वज-प्रतिष्ठापिता जीवन-सरणिर् एवाऽधुना नः शरणम् । मात्सर्येण, मित्रद्रोहेण, प्रवञ्चनया, न्यञ्चनया वीर्येणाऽपि राष्ट्रान्तराणि स्वराष्ट्रसात् कर्तव्यानीति । 'स्वं कार्यं साधयेद् धीमान् कार्य-भ्रंशो हि मूर्खते'ति न्याय-विदां मतम् इति कृतम् अवदातेन ।

माउसेतुङ्ग-निश्चयम् आकर्ण्य चाउएनलाई-महाशयोऽपि सोत्साहम् आह—अभिनन्दयामि शिरसा धारयामि च श्रीमतीम् अविकलाम् अविप्रतिपन्नां सर्व-संमतव्यां विचार-सरणिम् । यथादेशम् अशेषं प्रतिविधास्यामि, वृथा-चिन्ता-सन्तान-वितानकतानेन माऽत्रभवान् कृशत् । वञ्चनया ननु प्रापित्साम स्वं लक्ष्यम् । अयम् अभिसंधिः—पार्श्व-वर्तिनां राष्ट्राणां सीमावर्तिनः प्रदेशाः प्राक् चीन-राष्ट्र-चित्रे चित्र्येरन् । प्रतिराष्ट्रं बंभ्रम्यमाणाश् चीन-चाराश् च तत्-तद्-राष्ट्र-द्रुहाम् इङ्गितैर् अषडक्षीणम् अस्मदीयं मन्त्रम् अनुपालयन्तस् तानि चित्राणि तेषु तेषु हृदय-स्थानीयेषु महानगरेषु निश्शुल्कं वितरन्तु, हर्म्य-भित्तिषु च संलगयन्तु । ततः प्रचुर-प्रचार-महिम्ना जन-मानसम् उद्वेलनीयम् । मिथ्याऽपि नैकधाऽऽम्रेडितं सत्यं गणयन्ति पामराः । अमुना प्रचार-तन्त्रेणाऽस्वतन्त्रम् अनेकेऽसमीक्ष्यकारिणोऽविचार-रमणीया जना नूनं संशयीरन् चित्राणीमानि यथार्थानि न वेति, चित्रिताश् च प्रदेशा वस्तुतो स्वराष्ट्रियाश् चीनदेशीया वेति । प्रतिहत-शेमुषीकाः केचिद् अस्माकम् एव पक्षं स्वपोषं पोषयिष्यन्ति, अपरे विवदिष्यन्ते । एतावता प्रतिराष्ट्रं जन-मानसं भेत्स्यामहे । प्रथमं तावद्

अयम् उपजापः पञ्चशील-पिशुने भारते प्रसरतु । मन्ये प्रवञ्चन-विधयाऽमुया राष्ट्रपतेर् हार्दं निश्चप्रचं सेत्स्यति । अस्तु, साधयामि, आशीराशिभिः संवर्धनीयो जन इति ।

शुभंयुर् नो राष्ट्रपतिः । अहर्निशं राष्ट्रिय-श्वःश्रेयस-चिन्तन एव गलयति कष्टं स्वदेहयष्टिम् । विलक्षणं चाऽस्य मस्तिष्कम् । साम्राज्य-विस्तार-प्रकारेणाऽस्मदीयं द्वयं लक्ष्यम् एकेन बाणेन वेधयितुम् इच्छति— पार्श्व-वर्ति-राष्ट्रेषु साम्यवादाऽऽतङ्केन रूस-राष्ट्रस्याऽवनयनम्, एशिया-महाद्वीपस्यैक-च्छत्र-राज्येन चीनाऽभिजनानां यत्र तत्र लघु-राष्ट्रेषु बलाद् आवासेन वर्धिष्यमाणायाश् चीन-जनताया जीवन-समस्यायाः साधु समाधानं च । 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' । प्रधान-मन्त्रिणोऽपि मे महत् प्रज्ञा-सामर्थ्यम् । नूनं राष्ट्रपति-चिन्ता सुपरिहरेति ।

माउसोतुङ्गेन संवाद-गोष्ठीप्रकोष्ठे योजनाम् एनाम् अवधार्य भारतवर्षीयं साम्यवाद-प्रपञ्चप्रतिहतप्रज्ञं कम् अपि राष्ट्र-द्रुहाम् अग्रण्यम् चाउएनलाई उपामन्त्रयत्—

'चीनराष्ट्रस्य प्रधान-मन्त्री चाउएनलाई साम्यवाद-तन्त्र-प्रचार-क्षपित-सर्वायुषो भवादृशो नेतृ-मूर्धन्यान् धन्यान् वदाम्य् अस्मि । साम्यवादोपलक्षित-चीन-साम्राज्यं समृद्धं चिकीर्षतां भवताम् अमन्दाऽनन्द-सन्दोहाय विज्ञपयामि, यद् नेहरु-नेतृकं भारतवर्षीय-जन-मानसं चीन-सपक्षं समुद्वेलयितुं बद्धकक्षा भवन्तु भवन्त इति । यदि चिन्तितम् अञ्जसा सिध्यति नः, अचिरेण महता पुरस्कारेण पुरस्कर्तव्याः । प्रथमं तावद् भारताऽधिकृतं त्रिविष्टपं (तिब्बतं) चीन-राष्ट्रिय-चित्रेषु चित्रितं चीन-राष्ट्र-संपदम् उद्घोषयामः । परस्तान् निश्चेष्यामः कया वर्तन्या वर्तितव्यम् इति । यद्यमुनाऽपदेशेन भारत-राष्ट्रं चीन-साम्राज्याऽङ्गं बोभवीति, वत्स ! अस्मद्-उपनिवेशीभूतस्य भारत-वर्षस्य प्रधानमन्त्रित्व-पदवी त्वत्तो न दवीयसी' ।

ततो वङ्गप्रान्तात् साम्यवादि-नायकोऽऽब्रवीद् महामहिमन् ! स्वनाम-धन्यांश् चीन-राष्ट्रमूर्धन्यान् प्रति सत्यापयामि यद् मक्षिकाऽपि न जानीयाद् एतस्य वृत्तस्य, सर्वात्मना च भवदीयं निश्चयम् अनुमोदामहे, यथानिर्देशं च पालयितास्मः, विश्रब्धैर् भूयताम् ।

अपरेद्युः कालिकातायां मुंबय्यां दिल्लीनगरे अन्येषु च भारतवर्षस्य प्रधानपत्तनेषु प्रतोलीषु प्रतोलीषु वितीर्यमाणं, हर्म्य-कुड्य-संलग्नं च चीन-राष्ट्र-चित्रं जनाः पश्यन्ति । तत्र च त्रिविष्टपं (तिब्बतं) नयपालं (नैपालं) भूस्थानं (भूटानं) सिक्किमम्, असमप्रान्तं च विशेषेण चित्रितं दर्शं दर्शं चित्रीयन्ते

विप्रवदन्ते च। अज्ञाः पक्तव्य-प्रज्ञाः प्रायो जनाः प्रयोजनम् एतस्याऽन्योन्यं पृच्छन्ति संप्रवदन्ते, तारस्वरेण च जोघुष्यन्ते चित्रचित्रिताः प्रदेशा आस्माकीना इति। साम्यवादिनश् चीन-साम्राज्याऽङ्कं वङ्कं दिदृक्षवोऽपरे राष्ट्रद्रुहश् च तान् उपवदन्ते, कृत्रिमं च प्राचीनं त्रिविष्टपाऽऽदि-प्रदेशेतिहासं व्याचिख्यासन्ति, अवगमयन्ति च चित्रितानां प्रदेशानां यथार्थां स्थितिम्। नैतावता संतुष्यन्तः केचन तरुणा राष्ट्रभक्ता अहमहमिकया नगर-भित्ति-संलग्नानि तानि चित्राणि खण्डखण्डानि कुर्वते, समुद्युञ्जते च राष्ट्रद्रुहो जीवघातं हन्तुम् इति। लोकसभायाम् अपि सपक्षैर् असपक्षैर् दलैर् मिलित्वा वाकोवाक्येन पृष्टो नेहरु-महोदयः प्रतिकण्ठललामस्येदं-वृत्तस्य—राष्ट्र-संमानं न्यक्कुर्वन्ति धिक्कुर्वन्ति चैतानि चित्राणि कुतः कथं केन प्रचारितानि, किं च प्रभावुकं प्रतिविधेयं शासन-तन्त्रेणेति। प्रधानमन्त्री च विश्रब्धालापैः समाश्वासयति।

अन्येद्यू राजधानी-स्थितश् चीनराष्ट्र-प्रतिनिधिः साक्षाद् नेहरुं पश्यति, साकूतं चाऽर्पयति नेहरु-कर-कमले तद् एव चित्रम्। चित्रे चित्रिता भारतीया उदक्प्रदेशा अकस्मात् प्रधानमन्त्रिणो दृष्टि-पथम् अवतरन्ति। पञ्चशीलानुशीलनेन गृहीतशान्ति-व्रतस्याऽपि चेखिद्यमानस्य तस्य हृदयं परुषया रुषा समुद्विजते, तात्कालिक-मन्त्रिमण्डलीय-निश्चयेन च तिरस्करोति तच् चित्रम्।

सद्य एव च रम्यरम्याणि यावन्त्य् अपि हिमानी-वेष्टित-शिखराणि त्रिविष्टप-धरातलानि, सरसं मानसं च सर आ सृष्टेर् भारतीयंवैभवं नाऽमुना जघन्येन षड्यन्त्रेण चीनराष्ट्राऽङ्कं शक्यं कर्तुम् इति प्रबल-विरोधेन चीनराज-दूताय विरोधपत्रम् समर्प्यते।

प्रवञ्चना-चणश् चाऽश्राटुवचोविन्यासैर् आत्मनीनम् अपि हार्दम् अन्यथा विशकलयन् नेहरुम् अनुनिनीषति— सत्या भवतां विप्रतिपत्तिः। चैङ्काईशैकशासनेन परिकल्पितानि कानिचन प्राचीनानि चित्राणि बालिशेनाऽजानता प्रचारितानि वितथानि वेदितव्यानि कालेन परिमार्जनीयानीति नाऽन्यथा मन्तव्यानीति।

मन्दं मन्दं क्वचिज् जीविकोपार्जन-व्याजेन, अन्यत्र च साहाय्या-ऽपदेशेनाऽसंख्याश् चीनाभिजनाः पार्श्ववर्तिषु राष्ट्रेषु प्रविशन्ति, यत्र तत्र च सिकियांग-मङ्गोलिया-कोरिया-हिन्दचीनी-वीतनाम-मलाया-प्रभृतिषु क्षीण-राष्ट्रेषु चीन-जन-सामर्थ्यं सार्थं जनयन्ति।

(क्रमशः)

# स्वप्नवासवदत्तस्य दाहकोऽभून् न पावकः

डा० उषासत्यव्रतः*

'लोके हारि च वत्सराजचरितम्' इति कथयता कविता-कामिन्याः कान्तेन श्रीहर्षेण लोक-प्रसिद्धं तथ्यम् एवोद्घोषितम् । लोकानुरञ्जिन्य् उदयन-कथा हि प्राकृत-बौद्ध-जैन-संस्कृत-साहित्यस्याऽक्षय्यं स्रोतः । उत्तरकालीन-संस्कृतसाहित्येऽपीमं विषयम् अधिकृत्य बहूनां काव्य-नाटकानां सृष्टिः समजायत । भास-शूद्रक-श्रीहर्षादिभिर् अनेकैर् लब्धप्रतिष्ठैर् महाकविभिर् वत्सराज-वासवदत्तायाश् चरितं गायद्भिर् अर्जितं स्थास्नु यशः । महा-कवि-भासस्य भुवन-व्यापिनी कीर्तिर् वत्सराज-चरित-चर्चित-स्वप्नवासवदत्ताऽऽ-ख्ये नाटक एवाऽवलम्बते, अस्य कला-कलाप-कलितस्य नाटकस्य वैशिष्ट्यं हृदयंगमतया केनाऽपि नाट्य-कला-विशारदेन संश्लिष्टं साभिप्रायं चोक्तम् आसीत्—

भासनाटकचक्रेऽस्मिंश् छेकैः क्षिप्ते परीक्षितुम् ।<br>
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ इति ।

प्रतीयते पुरा कला-परीक्षकैः परीक्षा-निकषे कषितम् इदं नाटकं पौनः-पुन्येन, परं प्रतिवारम् एवाऽग्नि-शोधित-सुवर्णम् इवेदम् अतिशयेन दीप्तिम् आप्नोत् । सम्प्रत्य् अपि सा सूक्तिः सर्वथाऽविकृतैव तिष्ठति । यत्र हि काल-चक्रस्य प्रखरतर-ज्वालावलिषु पतितम् अपरिमितं साहित्य-जातं भस्मीभूतं तत्रेदम् उत्कृष्ट-कला-कलितं नाटकम् अद्याऽपि सबहुमानं तिष्ठति । अद्य नाऽस्त्य् अपूर्वा बृहत्कथा, परं जीवति वासवदत्ता, तनोति च भासस्याऽव्ययां कीर्तिम् । नाटकस्याऽस्यैतिहासिकं महत्त्वं भवतु, मा वा भूत्, परं नाटक-साहित्यस्येतिहासे त्व् इदं सर्वातिशयेन देदीप्यते ।

उत्कृष्टतमा हि इयं भासस्य कृतिः । तस्माद् एवेयं मूर्द्धन्येषु संस्कृत-नाटकेष्व् अनायासेन पदं लभते । तत्र हि सन्ति बहवो नाटकीया

*एम्. ए. पी-एच्. डी.; प्राध्यापिका; संस्कृत-विभागे, माडर्न कालेज फार विमन; डिफेन्स कालोनी, नई दिल्ली ।

गुणा ये इमां कृतिम् अतितरां दीपयन्ति । सुचिन्तित-कथावस्तुनः कलापूर्ण-प्रतिपादनं, लक्ष्यस्य संघटनं, प्रभावस्याऽपरिहार्यत्वं चेति सर्वम् अपि बलवद् अनुबध्नाति सहृदय-हृदयम् । लोक-प्रसिद्धम् उदयनवासवदत्तयोर् आख्यानं स्वप्नस्य नूतनया कल्पनया, नवीनैर् दृश्यैश् च संयोज्य भासेन सुतरां मनोहारि सम्पादितम् । भासस्य नाट्य-विशारदत्वं, चारित्र्य-गुरुत्वं च तदा नितरां सुस्पष्टं भवति यदा स्वप्नवासवदत्तस्य नायक-नायिकयोः साम्यं कथासरित्सागर-रत्नावल्यादिषु चित्रितैर् नायक-नायिकादिभिः सह क्रियते । श्रीहर्षादीनां कामुकं पतङ्ग-वृत्तिं च नायकम् अकृत्रिम-स्नेहिनं भार्यानुरागिणं च दर्शयता भासेन सर्वथा कला-चातुर्यं, चारित्र्य-शिक्षणं च प्रदर्शितम् । तथैव श्रीहर्ष-चिन्तिता ईर्ष्या-रञ्जिता वासवदत्ताऽपि स्वप्नवासवदत्तस्य पति-परायणां, पति-कल्याणनिरतां, दुःखेष्व् अप्य् अनुद्विग्नां, कर्तव्य-परायणां वासवदत्ताम् अनुगन्तुं न शक्नोति । यत्सत्यम् उभयोर् महद् अन्तरम् अस्ति । अत्र हि प्रणयि-जन-सुलभानां मनोहराणां सुकुमार-मनोभावानां तरलच्छटा दरीदृश्यते । विविधानां करुण-विप्रलम्भ-शृङ्गारादि-रसानां स्थितिर् नाटकायाऽस्मै गाम्भीर्यं प्रयच्छति । मानवीयानां सुख-दुःखादीनां यथास्थिति चित्रणेन रस-परिपाके नितरां साहाय्यं विदधाति । तृतीयाऽङ्के स्वपत्न्याः पद्मावत्याः कृते वासवदत्तया वैवाहिकीं मालां ग्रन्थयता भासेन यत् किम् अप्य् अपूर्वं कौशलं प्रादर्शि तत् तु निखिल-नाटक-साहित्ये कुत्राऽपि न लभ्यते । अहो दयनीयता तस्याः ! तत्र नास्ति कोपि तां सम्बोधयितुं सहानुभूतिं च प्रदर्शयितुम् ! सा मुक्त-कण्ठेन रोदितुम् अपि न शक्नोति । तया हि सर्वथा कर्तव्य-बुद्ध्याऽन्तर्हित-बाष्पया स्थीयते तत्र । कश्चित् सिद्ध-हस्तः कलाकार एवेदं सुकुमार-चित्रं समुपस्थापयितुं शक्नोति ।

कथावस्तु-संघटनेऽपि भासस्य सुमहत् कौशलं दृश्यते । प्रथमाऽङ्के ब्रह्मचारिणः स्थितिर् दर्शकान् वासवदत्ताया मन्त्रिणां च लावाणके तथाकथित-मृत्युं सूचयितुम् एव साभिप्रायं कल्पितेति तु स्पष्टम् एव । पञ्चमाङ्केऽपि वत्सराजं वासवदत्तां चैकत्र संगमयितुम् अद्भुतं नाट्य-कौशलं प्रादर्शि कविना । वासवदत्ता किञ्चित्तिमिराऽऽवृत-शयन-गृहे राजानं पद्मावतीत्य् अवगच्छन्ती तस्यैव शय्यायाम् उपविशति । तां च सुप्तां मत्वा न विघ्नं जनयतीति सर्वथा प्रकृतम् एव । वासवदत्ता-गत-मनसो राज्ञोऽपि स्वप्ने तस्या दर्शनं नाऽसङ्गतम् इति दृश्यम् इदं प्रकृतम् इव प्रतिभाति । इत्थम् एव सप्त-

माऽङ्के प्रनष्ट-घोषावती-दर्शनेन राज्ञः शोकः परां कोटिम् अधिगच्छति। एतेन रस-परिपाके सर्वथा साहाय्यं विधीयते । कालिदासम् अन्तरेण न कोऽप्य् अन्य एवं वस्तु-संघटनं कर्तुं पारयति । मनोहरा रसाऽभिव्यक्तिः, कथोपकथनानां स्वाभाविकत्वं, कथा-वस्तुनः संतुलनं चैते गुणा बलवद् एव सहृदयानां हृदयानि हरन्ति।

यद्य् अप्य् अस्त्य् अत्र मनोवैज्ञानिक-भावानां बाहुल्यं परम् अनेन न कुत्राऽपि नाट्य-कलाया व्याघातो दृश्यते। अनुवर्तिनीनां घटनानां संघटनेन अविच्छिन्नं हृदयं तत्र रमत एव, तथा चाऽऽह डा० सुखथनकरमहोदयः—

'A studies unity of purpose runs through the drama, binding the component parts closely together.'

नाटककारस्य लक्ष्यं त्व् एकतो राज-महिष्या वासवदत्तायाः पत्युः कृते विपत्ति-सहन-पूर्वकम् आत्म-त्यागः, अन्यतो राज्ञो वासवदत्तां विना राजकीयैश्वर्याय सर्वथा निरपेक्षभावश् च अस्ति । तस्मिन् स निश्चयेन प्रशंसनीयं साफल्यम् अवाप्नोत् । प्रेम्णोऽविकारित्वम्, एकरसत्वं च निरवच्छिन्न-रूपेण नाटकेऽस्मिन्न् अनुस्यूतं विद्यते । अयम् एव महाकवेर् महान् आदर्शो येन प्रेर्यमाणः स इमां कला-कलितां विप्रलम्भ-श्रृङ्गार-रस-रसितां कृतिं रचयामास ।

भासस्य कृतिर् इयं सर्वत्रैकस्वरेण सर्वातिशायिनी रचना ( a dramatic master piece ) अनुमन्यते। गहनं मनोवैज्ञानिकम् अध्ययनं (profound psychological study ) समस्त-सभ्य-जगतो गौरव-मण्डितो दाय ( The glorious heritage of the whole civilized world ) इति च मन्यते। तत्राऽऽदितः समाप्ति-पर्यन्तं महिष्या वासवदत्ताया मनोभावानाम् अन्तर्द्वन्द्वस्य चित्रणम् अस्ति । सा हि पति-परायणाऽऽत्मत्यागिनी भारतीय-नारीणाम् आदर्श-भूता विद्यते। तां चित्रयन् भासः पर्यायेणाऽऽर्य-संस्कृतिम् आर्य-नारीत्वं चैवाऽचित्रयत् । तस्याः सपत्न्याः पद्मावत्याः पत्युश् चोदयनस्य चित्रणम् अपि सर्वथा तद्-अनुरूपम् एव । पाश्चात्य-लेखकेन जानसान-महोदयेन नाटकम् इदम् सर्वोत्कृष्टं स्वीकृतम् । शाकुन्तलम् अतिरिच्य नान्यत्रैतादृक् नाट्य-कौशलम् अवाप्यते। एकम् एव पात्रम् अधिकृत्य नाटकम् इदं विरचयता नाटक-कारेण नाट्य-कला-सामर्थ्यं तद्-गत-वैदुष्यं च प्रादर्शि ।

नाटकेऽस्मिन् न केवलं दोषाणाम् अभाव एवाऽपितु गुणानाम् उत्कर्षो-

ऽपि दृष्टिपथम् आयाति। ते च गुणा नाटककारस्य श्रेष्ठत्वं व्यञ्जयन्ति। उदाहरणत्वेन ब्रह्मचारि-कृतं वर्णनम् उपस्थापयितुं शक्यते। द्वितीये तृतीये चाङ्के नैकस्याऽपि पद्यस्य दर्शनं जायते। उत्तरकालीन-नाटकवत् न तत्राऽनावश्यकं कवित्वम् अलङ्काराणां चाऽऽधिक्यम् दृश्यते। निरर्थक-घटना-वर्णनेऽपि शक्तेर् अपव्ययो न विहितः। नाटकीय-क्रियायाः (action) तीव्रत्वेन, चरित्र-चित्रणस्य स्पष्टत्वेन, कथावस्तुनः सारल्येन च नाटकम् इदं सुतरां लोक-प्रियम्। चरित्र-चित्रणे च प्रधान-पात्राणां तुलनायां गौण-पात्राणाम् उपेक्षाऽपि नैव वर्तते। यत्र कुत्राऽपि नाटक-कारो मूल-कथायां परिवर्तनम् अकरोत् तत्रैव साफल्यम् अलभत। नाटके सत्स्व् अपि बहुषु मनोहारि-वर्णनेषु द्वे एव वर्णने सर्वातिशायित्वेन तिष्ठतः। शेफालिका-कुञ्जगतं प्रमदवन-दृश्यं परं मनोवैज्ञानिकमहत्त्वम् आवहति। उद-यन-वासवदत्ता-पद्मावतीनां सुकुमार-भावानां सूक्ष्मं प्रदर्शनम् अपि कस्य सहृद-यस्य हृदयं नावर्जयति। राजा वासवदत्ता-पद्मावत्योर् उपस्थितिं पद्मावती च वासवदत्ताया यथार्थ-स्वरूपं न जानाति, इत्थं सर्वेषां हृदयस्थ-भावानाम् अकृत्रिम-प्रदर्शनं जायते, उदयनस्य वासवदत्ता-विषयक-प्रेम्णो नव-परिणीत-पद्मावती-विषयक-प्रेम्णश् च संघर्षश् चारु चित्रितः। पञ्चमाऽङ्के समुद्र-गृह-दृश्यम् अपि अपूर्व-रचना-चातुरीं प्रकटयति। वासवदत्ता जीवितेति राज्ञः सन्देहः तस्याः करस्पर्शेन दृढत्वं गच्छति। परं महाकविः सविशेषेण कौश-लेनेमं सुकुमार-भावम् अभिनय-विषयीकरोति।

वस्तुतस् तु महाकवेर् भासस्येयं कृतिर् आदर्श-भूमिं गतं दाम्पत्य-स्नेहम् अस्माकं पुरत उपस्थापयति। 'हृदयं त्वेव जानाति प्रीतियोगं परस्परम्' इति भवभूतिनोक्ता सूक्तिर् भास-नाटकेऽपि सर्वतोभावेन सङ्गतिम् आप्नोति। तत्र एकोऽन्यस्य कृते सर्वस्वं परित्यजन् सहर्षं दुःखान्य् आमन्त्रयति। न तादृश आदर्शः, भारतीयता, दाम्पत्य-स्नेहश् चोत्तरवर्तिषु नाटकेषु प्राप्यते। भासस्य नाटकेषु वर्णितम् औदार्यं चारित्र्य-गौरवं च तद्-अनुवर्ति-कवि-कृत-नाटकेष्व् अनवलोकय एव डा० सुखथनकर-महोदय एवं व्यलिखत्— 'The picture painted in it in broad out-line is as different from the scene of pretty intrigue, gallant adventure and shallow sentimentality of plays like the Priyadarśikā and Ratnāvalī as the grand mural frescoes of Ajanta are from the miniature painting of late age.' इति।

नाटकेऽस्मिन् गत्यात्मकतायाः प्राधान्यं दृश्यते। यद्यपि भास-कृतेषु सर्वेषु नाटकेष्व् एव प्रायेण गत्यवरोधो नास्ति तथापि प्रतिज्ञायौगन्धरायणे स्वप्नवासवदत्ते चाऽस्य प्रमुखत्वम् वर्तते। अस्य कृते सर्वं गौणत्वं नीयते। प्रतिज्ञायाम् इदं बहिर्गतं परं स्वप्ने तु प्राधान्येन मनोवैज्ञानिकम् एव।

यद्यपि कालिदास-विषये ख्यातिर् इयं विद्यते यत्— 'वैदर्भीरीति-सन्दर्भे कालिदासो विशिष्यते' इति, परं भासोऽपि न न्यूनताम् आवहति विषयेऽस्मिन्। प्रसाद-माधुर्य-गुण-गुम्फनेन साकं भावानां सारल्यं प्रभाव-शालित्वं चाऽपि भासस्य नाटकेषु पदे पदे दृश्यते। यद्यपि तत्र परम्परा-मुक्त-भावानां, वाक्कथनानां चोपेक्षेक्ष्यते परं न तेन नाटक-सौन्दर्यं हीयते। सत्यम् इदं यत् तत्राऽस्ति कवि-कल्पनास्व् आग्रहस्याऽभावः, परं नाटकीय-गुणानां गति-शक्ति-स्पष्टत्वादीनाम् अत्र स्वकीयं महत्त्वं चकास्ति, यद् अन्यत्र कष्टेन लभ्यते। न चाऽत्र प्रारम्भिक-नाटकेषूपलभ्यमानं रूक्षत्वं वर्तते, नाऽपि च कालिदासनाटकेषूपलभ्यमानम् अनुपमं महत्त्वं, तथापि तत्र कतिपय-गुणानां स्थित्येदं भारतीयनाटक-चक्रे मूर्द्धन्य-पदम् अङ्कीकरोति।

इदम् अप्य् अवश्यं स्वीकरणीयं यत् महती सौन्दर्याऽनुभूतिर् भास-कृतेऽस्मिन् नाटके दृश्यते। पात्राणि सजीवानीवाऽस्माकं पुरतो भ्रमन्ति। तूलिकया चित्रितम् इव च प्रधान-पात्राणां व्यक्तित्वं पृथक्-पृथग्-रूपेण स्फुरति, तथा च तेषु चित्रितानां मानव-सुलभ-भावानाम् अभिव्यक्त्या दर्शकानां हृदयेषु क्षिप्रम् एव तद्-गत-भावानां साधारणीकरणं जायते। अत एव हि नाटकम् इदं कालस्य क्रूर-प्रभावम् अतिक्रम्य अद्याऽपि 'ध्रियते', रसिकानां मनांसि चाऽनुरञ्जयति।

काव्य-पक्षेऽपि भासस्येयं कृतिः सुतरां हृदय-ग्राहिणी। अत्र प्रयुक्तानाम् अलङ्काराणां छटा बलवद् एव मोहयति रसिक-मनांसि। कविर् उपमा-रूपकोत्प्रेक्षादीन् प्रचलितान् अलङ्कारान् एव विशेषेण प्रयुङ्क्ते। रसाऽनुकूल्येनैव च तेषां प्रयोगं विदधाति। क्लिष्टत्वस्य तु तत्र नामाऽपि न भवति। नाटकेऽस्मिन् कुत्रचिद् उपमाया वैशिष्ट्यं, मार्मिकत्वम्

अवलोक्यते, कुत्रचिच् चाऽलङ्कारान्तराणाम्। तथाहि उपमावैशिष्ट्यम्—

कः कं शक्तो रक्षितुं मृत्युकाले रज्जुच्छेदे के घटं धारयन्ति।
एवं लोकस्तुल्यधर्मा वनानां काले काले छिद्यते रुह्यते च॥[१]

कुत्रचिच् चैकत्रैवोपमोत्प्रेक्षा-स्वभावोक्तीनाम् अलङ्काराणां संसृष्टिर् अलौकिकाम् एव छटाम् उद्भावयति। तद्यथा—

ऋज्वायतां च विरलां च नतोन्नतां च, सप्तर्षिवंशकुटिलां च निवर्तनेषु।
निर्मुच्यमानभुजगोदरनिर्मलस्य सीमामिवाम्बरतलस्य विभज्यमानाम्॥[२]

स्वभावोक्ति-विरोधाभासयोः सांकर्यम् अपि भावाभिव्यक्तौ कवेः साहाय्यं समाचरत् पाठकानां मनांसि हरति। यथा—

नैवेदानीं तादृशाश्चक्रवाका नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः।
धन्या सा स्त्री यां तथा वेत्ति भर्ता भर्तृस्नेहात् सा हि दग्धाऽप्यदग्धा॥[३]

अन्यच् च हृदय-स्पर्शिनीनां लोकोक्तीनाम् अपि यत्र तत्र प्रयोगे कविः सिद्ध-हस्त एव। तथा हि— 'वाचानुवृत्तिः खलु अतिथिसत्कारः', 'कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः', 'न हि सिद्धवाक्यान्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि।' स्थान-समयादि-वर्णनेऽपि भासः सरल-सरणिम् एवाऽङ्गीकरोति। तत्र कालिदास-भवभूतिवद् अतिरञ्जित-कल्पना-कलापो दृष्टि-पथं नाऽऽयाति। तपोवनस्य वर्णनम् इदं स्मारयतीव शाकुन्तलम्—

विश्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया,
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो,
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥ इति।[४]

कविर् अयं यत् किम् अपि वर्णयति तस्य चित्रम् इवोपस्थापयति। सन्ति बहूनि स्थलान्य् एतादृशि यत्र कविः स्वल्पैर् एव शब्दैः सर्वाङ्गं वस्तु वर्णयन् दृश्यते।

---

१. स्वप्नवासवदत्तम्, ६,१०। २. तत्रैव, ४,२।
३. तत्रैव, ६,१३। ४. तत्रैव, १,४।

यथा—

खगा वासोपेताः सलिलमवगाढो मुनिजनः,
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो,
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥[१]

अत्र सायंकालं वर्णयता कविनैकेनैव पद्येन सायंतनो नैसर्गिकः कार्य-कलापस् तथा वर्णितो यथा नाऽन्यत्र कोऽप्य् एवं वर्णयन् दृश्यते । परं जगद् इदं हि गुण-दोषोभय-युक्तं नाऽत्रैकान्तिका गुणा एवाऽपितु दोषा अपि गुणैः साकं संमिश्रिता विलोक्यन्ते । सदोषे लोके जायमानस्य कवेः कृतिर् अपि कथं नाम सर्वथा दोष-रहिता भवेद् ? अतः भासोऽपि तस्यां कोटौ समायाति । सत्स्व् अपि तस्य नाटकेषु गुणेषु बहुषु सन्ति केचन नाटकीया दोषाः । यथा—असूचितस्य पात्रस्य प्रवेशः, समम् एव रङ्गमञ्चस्य पात्राणां परस्पराऽनवलोकनम्, 'निष्क्रम्य प्रविश्ये-' त्यादिनाट्य-संकेतानां प्रयोग इति । परं प्रथमनाटककारस्य कृतित्वाद् अत्र कविकालिदासादिवत् पूर्ण-परिष्कृतेर् दर्शनाय नाऽभिलषितव्यम् आलोचकैः । अन्यच्च चाऽस्मिन् विषये तत्कालोचित-परम्पराणाम् अपि विचारः कर्तव्य एव । सम्भाव्यते साम्प्रतं यद् अनुचितं प्रतीयते तत् तदा युक्तम् एव भवेत् । अतोऽस्मिन् विषये निश्चयेन न किञ्चिद् अपि वक्तुं शक्यते ।

अन्ततो वयं इमम् एव निष्कर्षम् उपैमो यत्—'स्वप्नवासवदत्तस्य दाहकोऽभून् न पावकः' इति केनाऽपि यद् उक्तं तन् न सर्वथाऽर्थवाद एवाऽपित्व् अस्ति तत्र सत्यांशः । तस्य प्रमाणं त्व् इदम् एव, यद् इदं नाटकं समय-बाधाम् उत्तीर्याऽद्यापि संस्कृत-साहित्यं सबहुमानम् अलङ्करोति, लोकाच् च परां प्रतिष्ठाम् अद्याप्य् आकलयतीति ।

---

१. स्वप्नवासवदत्तम् १,१६ ।

कथा—

# मम प्रतिवेशी

रमेशकुमारो लौ*

अस्मिन्न् उपनगरे निवसतो मेऽसौ चतुर्थो मासो व्येति। प्रथम एवाऽह्नि यदाऽहं शकटात् सम्भारावरोहे नवबिल-विधित्सु-पिपीलिकेव, नव-नीडाऽऽरम्भाऽऽकुल-शकुनिर् इव व्यस्त आसं तदा हस्ताऽवलम्बं वितितीर्षुणा मम प्रतिवेशिना श्रीमता रामलभायेनाऽभून् मम प्रथमः परिचयः। इदानीम् अप्य् अहं स्मरामि यत् तस्मिन्न् एव क्षणे स उदरेण धामेख-स्तूपं, मुखेन गान्धार-कला-वर्णनेषु बहूल्लिखितं मनुष्य-धर्माणं, वेशेन मौर्यकालीनं परखम-यक्षं च स्मृति-रङ्गे युगपद् एव समानयत् । तत्क्षणं वचसा सोऽतीवमधुरः प्रतिभाति स्म । तदनन्तरं संलापाऽवसर-विशेषः कश्चिन् नाऽभवत् । कारणं च तत्र श्रीरामलभायस्य गृहेऽनिश्चिताऽल्पकाला च स्थितिः । परं यथा यथाऽत्रत्येषु जनेषु मम परिचय उपचीयते तथा तथा मम कर्णयोस् तस्य कीर्ति-श्रवण-विषयकोऽभ्यासो वर्धते।

अत्र निवसतस् तस्य बहुतिथः कालो व्यतीतः, परं नेदानीं यावत् कश्चिज् जानीते स कं व्यवसायम् अलङ्करोतीति । इतस् ततो जनेषु बहुधाऽस्य चर्चा प्रवर्तते। तद् यथाऽसौ प्रभूतं दायभागम् उपभुञ्जानः श्वशुर-कुलाद् अपि महान्तं धन-राशिं पत्न्या समं समगृह्णाद् इत्येके वदन्ति, साम्यवादे गूढ-श्रद्धोऽयं कार्य-प्रचाराऽर्थं वैदेशिकेभ्यो महद् द्रव्यं तिमसम् अङ्गीकरोति इत्य् अन्ये व्याहरन्ति। केचन त्व् अन्याम् एव कथां साग्रहं महता कण्ठेनोद्घोषयन्ति यद् अस्याऽस्ति कैश्चिद् असाधु-जनैर् मैत्री । एकदाऽनेन तैश् च मिलित्वा प्रपञ्चः सम्पादितः । रामलभाय-महत्तराः साधुवेश-धारिणस् ते हरिद्वारम् उपातिष्ठन्त। हरि-कथां कुर्वतां, प्रजागर-संकीर्तनं प्रचालयतां, गूढ-समाध्यादिकं श्रद्धा-जनयितृ-कर्म विदधतां तेषां तत्र कियान् अप्य् अनेहा अयात् । अत्रान्तरे तीव्र-तपश्चरण-दग्ध-सकल-कल्मषैर् ब्रह्मानन्द-निमज्जनैक-व्यसनैः परम-वीतरागैः सर्वतन्त्र-स्वतन्त्रैः

---

* एम. ए; प्राध्यापकः, सनातनधर्मकालेजः, मुजफ्फरनगरम् ।

करुणा-वरुणालयैः श्रीमद्भी रामानन्दैः (रामलभायस्य रामानन्दत्वं सुप्रतीतमेव) धनाऽऽकाङ्क्षैव मानवानाम् उत्पथ-प्रवर्तिनी हरिसेवा-पथ-परिपन्थिनी च, अतस् तस्याः समूलम् उन्मूलनाय गुरु-निर्दिष्ट-मार्गेणाऽभ्यासो विधेय इति यथाक्रमम् उपदिष्टम्। ततो योजनाऽनुसारं शिष्य-रूपिभिः स्वकीयैर् जनैर् एष विचारः प्रख्यापितो यद् भक्ता अध्यात्म-मार्ग-प्रवृत्त्यारम्भाऽर्थं स्वयम् एव सुवर्णाऽऽदिकं महार्घं द्रव्य-जातं गुरुवरेभ्यः समर्पयेयुः। गुरु-चरणाश् च सर्वभूत-हित-कारिणि कर्मणि स्वेच्छया तन् नियोजयिष्यन्तीति। श्रीरामानन्दैः प्रकाशं कथञ्चित् ननुनच-पुरस्सरा स्वीकृतिर् दत्ता। द्रव्य-समर्पण-पद्धतिर् अपि तैः शिष्यैः ससमारोहं विरचिता। काल-क्रमेण श्रद्धालु-जनता गड्डरिका-प्रवाहेण तथाऽनुसृतवती यथा श्रद्धायां भारतीया सर्वान् अतिशेरते इति लोक-प्रवादो दृढतरो जातः। स्त्रियस् तु विशेषतः 'अनायासम् अनावृतं मोक्ष-द्वारम्' इति मन्वाना आभूषणानि समार्पयन्त। अन्ततश् च यद् अभवत् तद् अनुमान-पदवीं सद्यः समारोहति।

एवं-विधानां लोक-वादानां सत्याऽसत्य-विवेचनं सहसैव कर्तुं न शक्यम्। परम् अस्मिन् अल्पेऽपि काले यत्र कुत्रचिद् रामलभायस्य यद् विविधं रूपम् अवाकर्णि तेन न जाने किमर्थं तत्समर्थन-लोभ-संवरणं चेतो न क्षमते।

रामलभायः समारोह-धुरन्धर इत्य् अत्रत्यो बालोऽपि ब्रूयात्। रामलीलाऽभिनयस्योद्घाटन-समारोहः स्याद् आहोस्विच् छ्रीरामचरितमानसस्या-ऽखण्ड-पाठ-समापनं वा स्यात्, स सत्सङ्ग-माहात्म्यं विज्ञापयन् दरीदृश्यते। सत्सङ्ग-प्रभावश् च तस्याऽऽपणे कस्यचिद् अनोकहस्याऽधः ताशपत्र-क्रीडा-सक्तस्य गाली-राशिभिश् च सुहृदोऽलङ्कुर्वतोऽनेकधा मयाऽवलोकितः। अस्मत्-क्षेत्रे निरीक्षणार्थम् आगतानां विभिन्न-दल-नेतॄणां सोत्साहं पथ-प्रदर्शक-रूपेण भ्रमन् रामलभाय-महाभागोऽयं प्रायेण दृष्टि-पथम् आगच्छति। अनेनाऽस्य राजनीत्याम् अपि प्रभावोत्पादन-करीष-कषणे चञ्चु-चालन-चापल्यं स्फुटम् एव।

कदाचिन् मयाऽश्रावि यद् असौ श्रीनन्दा-महोदयस्य सदाचार-प्रचार-स्वप्न-साधिकायाः संस्थाया अत्रत्य-शाखायाः सञ्चालकोऽस्ति। निर्धनच्छात्राणां विधवानाञ् च साहाय्यं करोति। एतादृशी समाज-सेवा-भावना सर्वथा प्रशस्यैवेति मे चेतसि तम् अधिकृत्य कोऽपि श्रद्धाऽङ्कुरः प्रादुर् अभूत्। परं ह्य् एव तत्राऽभवत् तुषार-पातः। मध्याऽह्नाऽनन्तरं यदाऽहं कार्य-वशाद्

( शिष्टं पृ. १८३ द्र.)

# तमन्तिमं गुरुं भजे†

कृष्णलालनादानः*

ज्वलत्तडिद्घनो यथा सुखोदकप्रदस्तथा
प्रचण्डखड्गधारिणं तथा दयार्द्रचेतसम् ।
जयप्रणादघोषकं पदप्रहारकम्पकं
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ १ ॥

गुरोर्यथार्थनाम्न आत्मजो बहादुरस्य भोः
तथैव वीररक्तसंयुतो विनाशनाय च ।
कृतप्रतिज्ञ एव प्राणघातकस्य यः पितुर्
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ २ ॥

हिमालयस्य बिभ्रदुन्नतिं स्थिरत्वमेव च
गभीरतां च सागरस्य सूर्यवत् परन्तपः ।
स्वधर्मरक्षको हि यस्त्यजेदसूनपि द्रुतम्
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ ३ ॥

अतीतसंख्यमप्रमेयसाधनं द्विषद्बलं
दलं च मुष्टिमेयमल्पसाधनं क्व रे गुरोः ।
तथापि साहसेन यस्य लभ्यते जयोऽधुना
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ ४ ॥

अहो क्व कोमला तनुः क्व चेष्टकाचयो दृढस्
तथापि धर्ममोक्षणाद् वरं मृतिर्हि स्वीकृता ।
यदीयपुत्रयुग्महृत्स्थिरत्वमद्भुतं स्मृतं
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ ५ ॥

---

† गुरुगोविन्दसिंहम् अभिलक्ष्य विलिखिता ।

* एम ए., डी. ए. वी. कालेज, चित्रगुप्तरोड, देहली ।

प्रवृद्धवेगनिःश्वसत्तुरङ्गकोपवह्निना
लपल्लपल्लपल्लपत्कृपाणजिह्वया पुनः ।
प्रचारितं द्विषद्वने भयं हि येन सिंहवत्
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ ६ ॥

ककारपञ्चकं वहन् मृगेन्द्रतुल्यविक्रमः
करस्थजीवितो मुदा द्विषद्विमर्दनोद्यतः ।
भयङ्करो मरुद्गणो यदीयशिष्यसद्गणो
धुरन्धरं रिपुच्छिदं तमन्तिमं गुरुं भजे ॥ ७ ॥

---

( १८१ पृष्ठस्य शेषः )

गृहाद् बहिर् आगच्छम्, तदोपद्वारं कस्यचिद् अश्रूयत क्रन्दन-स्वरः । कन्धरां परिवर्त्य यावद् दृष्टिपातं करोमि तावद् 'हा हताऽस्मि, हताऽस्मि! परित्रायध्वम्!! लुण्ठाक! मम मास-द्वयस्य वेतनम् अपलपसि' इति गृहीत-कशा-दण्डस्य रामलभायस्य पुरतो विलपन्तीं दीनां मलिन-वसने वसानां काञ्चित् स्त्रियम् अपश्यम्। 'आ दास्याः पुत्रि! मोषिके! धाव। अद्यापि······' इति रामलभाय-स्वरं श्रुत्वा यावद् अहं द्वाराऽन्तरे दृष्टि-निक्षेपं विदधे तावत् स प्रद्रुत्य पक्षाऽन्तरे निलीनः। सायं वार्ता-प्रसङ्गे केनचिद् अहं सूचितो यत् पिशुनोऽयं साहाय्यस्य नाथमानाः स्त्रियो दासीकुरुत इति । एवं-विधानि चरित्राणि दर्शं दर्शं श्रावं श्रावम् अहम् एभ्यो जुगुप्सेय, अथवा—

धर्म-व्यतिक्रमो दृष्ट ईश्वराणाञ्च साहसम् ।
तेजस्विनां न दोषाय वह्नेः सर्वभुजो यथा ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत् स्ववचोयुक्तं बुद्धिमांस्तत् समाचरेत् ॥

इति श्रीशुक-वचनेषु श्रद्दधानो मनसः शान्तिम् आप्नुयाम् इति न पारये निश्चेतुम् ।

---

# संस्कृताऽभिलेखानां काव्य-वैभवम्

सत्यव्रतः*

लेखनोपकरणानाम् अनधिगमाद् विप्रकृष्टेऽतीतेऽत्र देशे भूभृद्भिर् इतरैश् च श्रीमद्भिर् ये लेखाः स्तम्भेषु शिला-खण्डेषु ताम्र-पट्टादिषु चोत्कारितास् तेऽभिलेखा अभिधीयन्ते। भारतेतिहासे मौर्य्य-वंशाऽवतंसस्य सम्राजः प्रियदर्शिनोऽशोकस्य धर्मलिपयोऽभिलेखानां प्रथमा आयान्ति। असौ हि मौर्य-सम्राट् कीर्त्ति-ध्वजान् इव प्रोच्छ्रितान् स-लेखान् स्तम्भान् प्रत्यन्त-प्रदेशेषु निचखान, ये तद्राज्यस्य सीम्नः परिच्छेत्तुं बंहिष्ठं नः साहाय्यम् आचरन्ति। प्रियदर्शिनोऽपरे समे लेखा गिरिषूत्कीर्णाः। इमा धर्म-लिपयः प्राकृत-वाचा व्यरच्यन्त ब्राह्मी-लिप्या च व्यलिख्यन्त। लोकेषु राज-पुरुषेषु च नृप-शासनानि प्रसारयितुं धर्मं प्रचारयितुं तद्विहितानि सर्वजन-हितानि कृत्यानि चोपवर्णयितुम् इमे लेखा निबद्धाः। अशोकाद् ऊर्ध्वं तद्-ग्रथितं विततं साम्राज्यं सपदि नैकधा व्यभिद्यत। तेषु तेषु भू-भागेषु ते ते शासका उदीयुः, तत्-तत्स्थानेषु चाऽमितान् लेखान् उत्कीर्णयामासुः। शुङ्ग-आन्ध्र-काण्व-कुषाण-वंश्यानां क्षत्रपाणां चाऽभिलेखाः प्रकामं प्राकाश्यम् आगताः। शुङ्गानां क्षत्रपाणां च कांश्चिल् लेखान् विहाय तेऽपि भूयसा प्राकृत-गिरोपनिबद्धाः। वाशिष्ठीपुत्र-पुलुमाविनो नासिक-कन्दरा-लेखः प्राकृत-गद्यस्य किरीटायते। अमीषां महीभृतां लेखास् तेषां वंशावलीं जय-पराजय-सन्धि-विग्रह-दानाभियान-वदान्यता-वृत्तानि च याथार्थ्येन कात्स्न्र्येन चोच्चैः श्रावयन्ति। गुप्त-कालात् प्रभृति लेख-परम्परा साऽनुस्यूता प्रवर्तते। गुप्त-काले गीर्वाण-गीः प्राकृतं निरस्य नितराम् अभ्युदियाय राजभाषाऽऽसनं चाध्युवास। तदानींतना अभिलेखा अविकला विबुध-वाचा विरचिताः। गुप्त-नृपतीनाम् अभिलेखेषु केचिद् गुण-वैशिष्ट्य-भाञ्जि सम्राजां चरितानि वर्णयन्ति, केचित् शौर्य-विजय-विजृम्भितान् व्यतिकरान् उद्घोषयन्ति, इतरे केचित् तदौदार्यं प्रख्यापयन्ति, अपरे च लोक-मङ्गलाय तत्कृतानि कर्माणि श्लाघन्ते। प्रायेण शासितार एव स्वीयान्य् उच्चावचानि वृत्तानि प्रख्यापयितुं लेखान् उदलेख-

*एम. ए. प्राध्यापकः; गवर्नमेण्ट-कालेजः; श्रीगङ्गानगरम् (राजस्थान)।

यन्, परं वणिक्-शिल्पिनाम् अभिलेखा अपि नाऽप्राचुर्यं भजन्ते। अपरैः स-धनैर् अपि केचिद् अभिलेखाः प्रणायिताः परं तेऽल्पीयांस एव।

राज-कवयोऽपरे पार्षदा वेमान् अभिलेखान् प्रशस्तीश् च प्रणिन्युः प्रथित-नैपुण्या उत्कीर्ण-काराश् च स्तम्भ-शिला-ताम्र-पट्टेषूदकिरन्। अमी कवयः प्रतिष्ठित-पदाऽऽसीना अपि परिणत-धियो वश्च-वाचो विपश्चितो नाऽऽसन्। अनेन भूयांसोऽभिलेखाः सरल-सरलया भाषयाऽनलङ्कृतया शैल्या च व्यरच्यन्त। क्वचिच् शब्द-शास्त्रस्य स्खलितान्य् उपलभ्यन्ते, इतरत्र चाऽपरैर् दोषैः काव्यं दुष्यति। परं सन्ति काश्चित् प्रशस्तयो याः प्रोत्तुङ्गं काव्य-वैभवम् अपि लङ्घयन्ति। आसु कुत्रचित् काव्य-विच्छित्तिर् विजृम्भते, कुत्रचिद् अनवद्या अलङ्कारा विलसन्ति, कुत्रचिद् भव्या भावा उन्मिषन्ति, कुत्रचिद् हृदयाऽऽवर्जकानि वर्णनानि दृक्पथम् आयान्ति, प्रणेतॄणां वैदुष्यं काव्य-मर्मज्ञत्वं च प्रथयन्ति। यत्सत्यम् आगुप्तकालात् संस्कृताभिलेखाः काव्य-प्रकृतिं गृह्णन्ति साहित्य-शास्त्र-विधानं साभिनिवेशम् अनुसरन्ति। अत्र हि हरिषेण-रविल-वत्सभट्टि-वासुल-रविशान्ति-रविकीर्त्ति-प्रणीताः कृतयः सविशेषं प्रशंसार्हाः।

प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहं परिसमाप्त्यर्थं ग्रन्थादाव् इष्टदेवता-स्मरणात्मकं मङ्गलं विधीयते। अभिलेख-मङ्गल-पद्येष्व् अपि शङ्कर-विष्णु-सुगत-सूर्य-प्रभृतयो देवा वराहादयश् च विष्णोर् अवतारः कवीनां स्तवन-भाजनतां गताः। वैदेशिका हूणा अपि सूर्य-वराहाऽऽद्यनुयायिनो बभूवुः। परम-भागवतानां गुप्त-नृपाणां प्रशस्तिषु सुगत-प्रशंसा तेषां धर्म-सहिष्णुत्वम् औदार्यं चाऽऽचष्टे।

अभिलेखानां मङ्गलाऽऽचारेषु वन्द्य-देवानां सकलानि वैशिष्ट्यानि सम्यक् प्रथितानि। शङ्करो भूतानाम् आविष्कृति-स्थिति-लयानां कारणं मन्यते। तस्य त्रिपुरान्तकत्वम् अन्धकद्विट्त्वम् अर्धनारीश्वरत्वं शशि-भुजग-पिनाक-धरत्वम् अपि प्रशस्तिषु साधूपवर्णितम्। कानिचिन् मङ्गल-पद्यानि विदां विनोदाय प्रशस्तिभ्योऽत्र प्रस्तूयन्ते।

शंकरः—

लोकाविष्कृतिसंक्षयस्थितिकृतां यः कारणं वेधसां
ध्वस्तध्वान्तचयाः परास्तरजसो ध्यायन्ति यं योगिनः।
यस्यार्द्धस्थितयोषितेऽपि हृदये नास्थायि चेतोभुवा
भूतात्मा त्रिपुरान्तकः स जयति श्रेयः-प्रसूतिर्भवः॥ १॥

आशोणां फणिनः फणोत्पलरुचा सैंहीं वसानं त्वचं
शुभ्रां लोचनजन्मना कपिशयद् भासा कपालावलीम् ।
तन्वीं ध्वान्तनुदं मृगाकृतिभृतो बिभ्रत् कलां मौलिना
दिश्यादन्धकविद्विषः स्फुरदहिस्थेयं पदं वो वपुः ॥ २ ॥[१]

**विष्णुः—**

श्रियमभिमतभोग्यां नैककालापनीतां
त्रिदशपति-सुखार्थं यो बलेराजहार ।
कमल-निलयनायाः शाश्वतं धाम लक्ष्म्याः
स जयति विजितार्त्तिर्विष्णुरत्यन्त-जिष्णुः ॥ १ ॥[२]

**सूर्यः—**

तत्त्वं ज्ञानविदोऽपि यस्य न विदुर्ब्रह्मर्षयोऽभ्युद्यताः
कृत्स्नं यश्च गभस्तिभिः प्रविसृतैः पुष्णाति लोकत्रयम् ।
गन्धर्वामर-सिद्ध-किन्नर-नरैः संस्तूयतेऽभ्युत्थितो
भक्तेभ्यश्च ददाति योऽभिलषितं तस्मै सवित्रे नमः ॥ १ ॥[३]

**सुगतः—**

येनेदमुद्भव-निरोध-परम्परायां मग्नं जगद्विविधदुःखनिरन्तरायाम् ।
तित्रासुना त्रिपदीरो निरदेशि धर्मस्तस्मै नमोऽस्तु सुगताय गताय शान्तिम् ॥[४]

**वराहः—**

जयति धरण्युद्धरणे घनघोणाघातघूर्णितो महीध्रः ।
देवो वराहमूर्त्तिस्त्रैलोक्य-महागृह-स्तम्भः ॥ १ ॥[५]

**प्रसङ्गाप्तानाम् ऋतु-नगर-रण-प्रयाणादीनां यथापरिमाणैर् वर्णनैः काव्य-वपुः परिपुष्यते । यथोवाच विश्वनाथः —**

सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ॥

---

१. ईशानवर्म्मणः हडा-शिलालेखे । २. स्कन्दगुप्तस्य जूनागढ़-लेखे ।
३. पट्टवायश्रेण्याः प्रशस्तौ । ४. गोविन्दगुप्तप्रशस्तौ । ५. तोरमाणस्यै-रणलेखे ।

एतेनैवोच्चावचैर् वर्णनैः काव्य-वर्ष्म मांसलयितुं तत्र रामणीयकं चाऽऽपादयितुं कवयः कृताभिनिवेशा दृश्यन्ते। तथाहि कुमारसम्भवं हिमाद्रि-मध्वोर् ललित-वर्णनेन समृद्धं वर्तते। रघुवंशं वसन्त-रणादीनां वृत्तैर् अभिख्यां पुष्णाति। किरातार्जुनीये शरदोऽर्जुन-किरातयोर् आहवस्य च सुरम्यं वर्णनं कविनाऽकारि। शिशुपालवधं च शैल-सागर-केलि-विलास-युद्ध-प्रयाण-मण्डितं विद्यते। प्रशस्ति-कर्त्तारोऽपि स्वीयां वर्णन-क्षमतां काव्य-नैपुणीं प्रौढिं च प्रदर्शयितुं यथा-प्रसङ्गं नगर-युद्धर्तूनां वर्णनं चक्रुः।

तद्यथा नगर-वर्णनम्—

कुमारगुप्ते पृथ्वीं प्रशासति वस्त्र-शिल्पिनां तन्तुवायानां लब्ध-कौशलानां श्रेणी जातादरा लाटदेशाद् वाणिज्याय दशपुरम् आयासीत्। प्रशस्ति-ललामभूतायां तस्याः पूर्वायां कविना वत्सभट्टिना दशपुरस्य यच्चेतोहरं वर्णनं व्यधायि तदेकदेशोऽत्र मनाक् प्रदीयते—

तटोत्थवृक्षच्युत-नैक-पुष्प-विचित्र-तीरान्त-जलानि भान्ति।
प्रफुल्ल-पद्माभरणानि यत्र सरांसि कारण्डव-संकुलानि॥ १॥
विलोलवीची-चलितारविन्द-पतद्रजः-पिञ्जरितैश्च हंसैः।
स्वकेसरोदार-भरावभुग्नैः क्वचित् सरांस्यम्बुरुहैश्च भान्ति॥ २॥
चलत्पताकान्यबला-सनाथान्यत्यर्थशुक्लान्यधिकोन्नतानि।
तडिल्लता-चित्र-सिताभ्र-कूट-तुल्योपमानानि गृहाणि यत्र॥ ३॥
यद् भात्यभिरम्य-सरिद्-द्वयेन चपलोर्म्मिणा समुपगूढम्।
रहसि कुचशालिनीभ्यां प्रीतिरतिभ्यां स्मराङ्गमिव॥ ४॥

यशोवर्म्मणो नालन्दा-प्रशस्तौ नालन्दा-नगर्या वर्णनं कव्योर् वैदग्धीं व्यनक्ति—

यासावूर्जित-वैरि-भू-प्रविगलद्दानाम्बुपानोल्लसन्-
माद्यद्भृङ्गकरीन्द्रकुम्भदलनप्राप्तश्रियां भूभुजाम्।
नालन्दा हसतीव सर्वनगरीः शुभ्राभ्रगौरस्फुरच्-
चैत्यांशुप्रकरैस्सदागमकलाविख्यातविद्वज्जना॥ १॥
यस्यामम्बुधरावलेहिशिखरश्रेणी विहारावली
मालेवोर्ध्वविराजिनी विरचिता धात्रा मनोज्ञा भुवः।
नानारत्नमयूखजालखचित-प्रासाददेवालया
सद्विद्याधरसङ्घरम्यवसतिर्धत्ते सुमेरोः श्रियम्॥ २॥

युद्ध-वर्णनम्—

युद्धम् अप्य् अभिलेखेषु वर्ण्य-विषयतां प्रयाति। आश्रय-दायिनां क्षिति-पतीनां वैरिभिः साकं प्रवृत्तं समरं प्रशस्ति-कर्त्तारः कवयो मुक्त-सङ्गं ताट-स्थ्येन व्यवर्णयन्त। सेना-प्रयाणं कुतुक-करं तच्छौर्यं रण-पाटवं चाऽत्र सुष्ठु चित्रितानि। आदित्यसेन-ईशानवर्म-पुलुकेशीनां प्रशस्तिषु वृत्ति-बहुलम् ओजो-युतं रण-वृत्तं किम् अपि काव्य-गौरवम् आरोहति, श्लाघां च विशेषेणाऽर्हति।

कुमारगुप्तो यदा मन्दरायमाणो मौखरेर् ईशानवर्म्मणो बल-वारिधिं ममन्थ तदा रजोजलाऽऽप्लावेन महा-मत्त-मातङ्ग-शैला अपि जुघूर्णुः—

उत्सर्पद्वातहेलाचलितकदलिकावीचिमालावितानैः
प्रोद्यद्धूलीजलौघभ्रमितगुरुमहामत्तमातङ्गशैलः
भीमः श्रीशानवर्मक्षितिपतिशशिनः सैन्यदुग्धोदसिन्धुर्
लक्ष्मीसंप्राप्तिहेतुः सपदि विमथितो मन्दरीभूय येन ॥[१]

अनेनैव संगरेण सार्धं तयोर् वैरं न शशाम। कुमारगुप्त-सूनुर् दामोदर-गुप्तोऽपि ईशान-वर्म्माणं रुरोध हूण-विजयिनीं च तद्-वाहिनीं नैकधा बिभेद चिच्छेद च। तयोर् आहवः कविनेत्थं व्यवर्णि—

यो मौखरेः समितिषूद्धतहूणसैन्यावल्गद्घटा विघटयन्नुरुवारणानाम्।
सम्मूर्च्छितः सुर-वधूर्वरयन्ममेति तत्पाणिपङ्कजसुखस्पर्शाद्विबुद्धः ॥[१]

मौखरि-कुल-सत्तमस्येशानवर्म्मणः प्रयाणेषु बलोद्धूत-रजोभिर् जगत् तथाऽऽवृतं यथा लोकाः काल-विमूढा बभूवुः, नाडिकयैव च दिनाऽऽदि-मध्या-ऽवसनानि विदुः—

प्रस्थानेषु बलार्णवाभिगमनक्षोभस्फुटद्भूतल-
प्रोद्भूतस्थगितार्कमण्डलरुचा दिग्व्यापिना रेणुना।
यस्या मूढदिनादिमध्य-विरतौ लोकेऽन्धकारीकृते
व्यक्तिं नाडिकयैव यान्ति जयिनो यामास्त्रियामास्विव ॥[२]

असौ हि वीर्यवतां धुरीण आन्ध्र-पतेः सहस्र-त्रय-मातङ्गात्मकं सैन्यं बभञ्ज. शूलिकानाम् अश्वानीकं विददार, गौडांश् च स्थल-भुवोऽपसारयामास—

जित्वान्ध्राधिपतिं सहस्रगणितत्रेधाक्षरद्वारणं
व्यावल्गन्नियुतातिसंख्यतुरगान् भङ्क्त्वा(तथा)शूलिकान्।
कृत्वा चायतिमोचितस्थलभुवो गौडान् समुद्राश्रयान्
अध्यासिष्ट नतक्षितीशचरणः सिंहासनं यो जिती ॥[२]

१. अफसदलेखे २. हडाप्रशस्तिः।

पुलकेशि-द्वितीयो गुर्जर-देशस्य विश्रुत-यशा योद्धा आसीत्। स सम-कालिकान् सर्वान् भूपान् जिगाय हर्षं च भय-विगलित-हर्षं चकार। रवि-कीर्त्तिस् तद्-दिग्विजयं सविस्तरं व्यवर्णयत्। आस्वाद्यतां ततः कानिचित् पद्यानि—

वरदातुङ्गतरङ्गरङ्गविलसद्ध्वंसावलीमेखलां
　　वनवासीमवमृद्नतः सुरपुरप्रस्पर्धिनीसम्पदा।
महता यस्य बलार्णवेन परितः सञ्छादितोर्वीतलं
　　स्थलदुर्गं जलदुर्गतामिव गतं तत्तत्क्षणे पश्यताम्॥

उद्धूतामलचामरध्वजशतच्छत्रान्धकारैर्बलैः
　　शौर्योत्साहरसोद्धतारिमथनैर्मौलादिभिः षड्विधैः।
आक्रान्तात्मबलोन्नतिर् बलरजःसञ्छन्नकाञ्चीपुर-
　　प्राकारान्तरितप्रतापमकरोद्यः पल्लवानां पतिम्॥

तु-वर्णनम्—

ऋतु-वर्णनं काव्ये वैविध्यं लावण्यं चार्पयति। अधिगत-महिमानः कवयोऽपि तत्र सयत्ना भवन्ति। प्रशस्ति-कृद्भिर् अवसर-प्राप्तानाम् ऋतूनां वर्णन-व्याजेन काव्य-वैदग्ध्यं शब्द-गुम्फन-चयन-चातुर्यं हृत्-सरसत्वं कमनीय-कल्पना-वैभवं चाऽभिलेखेषु निश्शेषेण प्रादर्शि। क्वचित् क्वचित् प्रशस्ति-काराणाम् ऋतु-वर्णनम् अतितरां रामणीयकम् अवगाहते, साहित्यिक-कृति-समकक्षतां चाऽऽरोहति।

गुप्तान्वय-ललाम-भूतस्य चन्द्रगुप्तविक्रमादित्यस्य तनु-जनुषो गोविन्द-गुप्तस्य रविल-कृता प्रशस्तिर् मन्दसोरतोऽवाप्ता। दशपुर-गोप्ता गुप्तवंश-पक्ष्यः प्रभाकरस् तस्य सेनापतेर् वायु-रक्षितस्य दत्तभट-नामधेयं सुतं स्वेषां बलानाम् अधिपं चकार। दत्तभटः पित्रोः पुण्याऽभिवृद्ध्यै शुभ-योग-सिद्ध्यै च, स्तूप-प्रपाऽऽराम-सध्रीचीनं कूपं वसन्ते निरमिमीत। प्रशस्ति-कारः कवी रविलो मधोर् यद् अभिरामं वर्णनं तत्राऽकार्षीत् तद् अधीत्य हर्षाऽऽन्दोलितं भवति चेतः। पीयतां मधोर् मधुरिमा—

भृङ्गाङ्गभारालसबालपद्मे काले प्रपन्ने रमणीयसाले।
गतासु देशान्तरितप्रियासु प्रियासु कामज्वलनाहुतित्वम्॥
नात्युष्णशीतानिलकम्पितेषु प्रवृत्तमत्ताऽन्यभृत-स्वनेषु।
प्रियाधरोष्ठारुणपल्लवेषु नवां वहत्सूपवनेषु कान्तिम्॥

यशोधर्मणो मन्दसोर-स्तम्भ-लेखेऽपि (वि० सं० ५८९) कवि-कृतं वसन्त-वर्णनं याथार्थ्येन चेतोहरम् । एतद् वर्णनं निस्संशयं कालिदास-कवितां स्मारयति—

यस्मिन् काले कल-मृदु-गिरां कोकिलानां प्रलापा
भिन्दन्तीव स्मर-शर-निभाः प्रोषितानां मनांसि ।
भृङ्गालीनां ध्वनिरनुवनं भारमन्द्रश्च यस्मि-
न्नाधूत-ज्यं धनुरिव नदच्छ्रूयते पुष्पकेतोः ॥
प्रियतम-कुपितानां कम्पयद् बद्धरागं
किसलयमिव मुग्धं मानसं मानिनीनाम् ।
उपनयति नभस्वान् मानभङ्गाय यस्मिन्
कुसुम-समय-मासे तत्र निर्म्मापितोऽयम् ॥

वत्सभट्टि-प्रणीता पट्टवाय-श्रेण्याश् चतुश्चत्वारिंशत्पद्यात्मिका मन्दसोर-प्रशस्तिर् दोष-लेश-स्पृष्टाऽपि किम् अपि काव्य-वैशिष्ट्यम् आरोहति । क्षितिपति-वृषस्य कुमारगुप्तस्य राज्यकाले दशपुरागतैः कौशलोपेतैः पट्टवायैः शिल्पायास-धनैः ४३६ खिष्टाब्दे सहस्यमासीय-शुक्लपक्षस्य त्रयोदशेऽह्नि मङ्गलाचार-विधिना भगवतो दीप्त-रश्मेः प्रासादो निरमायि । विविधैर् वृत्तैः 'प्रयत्नेन' निबद्धायाम् अस्यां पूर्वायां धीमता कविना शरत् सुष्ठु व्यवर्णि—

रामा-सनाथ-भवने दर-भास्करांशु-
वह्नि-प्रताप-सुभगे जल-लीन-मीने ।
चन्द्रांशु-हर्म्यतल-चन्दन-तालवृन्त-
हारोपभोग-रहिते हिमदग्धपद्मे ॥
स्मर-वशग-तरुणजन-वल्लभाङ्गना-विपुल-कान्त-पीनोरु-
स्तन-जघन-घनालिङ्गन-निर्भर्त्सित-तुहिन-हिम-पाते ॥

त्रयोविंशति-पद्य-युता गर्गट-शकट-वास्तव्य-रविशान्ति-रचिता मौखरेर् ईशानवर्म्मणः प्रशस्तिर् मौखरीणां वृत्तं सविस्तरं प्रस्तौति । ईशस्नात्मजः सूर्यवर्माऽन्धक-भिदो क्षेमेश्वरप्रथित-नामधेयं विशीर्णं भवनं ५५४ खिष्टाब्दे प्रावृषि संस्कारितवान् । सा तत्रेत्थं वर्णिता—

यस्मिन्कालेऽम्बुवाहा नवनवलरुचः प्रान्तलग्नेन्दुचापास्
तन्वन्त्याशावितानं स्फुरदुरुतडितः सान्द्रधीरं क्वणन्तः ।
वाताश्च वान्ति नीपाञ्चवकुसुमचयानम्रमूर्ध्नो धुनाना-
स्तस्मिन्मुक्ताम्बुमेघद्युति भवनमदो निर्म्मितं शूलपाणेः ॥

अलङ्काराः—

अलङ्काराः शब्दार्थयोर् अस्थिरा धर्माः स्थिरा वेति नात्र विवाद-विषयः। अलङ्काराः काव्य-शोभातिशायिन इति तु निर्विवादम्। काव्यम् अलङ्कारोपेतं सचमत्कृति जायते। परं बहुलाऽलङ्कार-भाराक्रान्ता वनितेव कविताऽप्य् बहुलाऽलङ्कार-भारेणोपहत-लावण्या भवति। प्रशस्तिकर्त्तारः स्वीयासु कृतिषु विविधान् सौन्दर्य-संवर्धकान् शब्दार्थालङ्कारान् प्रायुञ्जत। अभिलेखेष्व् अलङ्काराः क्वचिद् अपि प्रसभं नोपन्यस्तास् तेऽनायासम् एव तत्र समायाताः। अनेनैव तत्प्रयुक्तिर् अभिलेखेषु काम् अपि विच्छित्तिं जनयन्ती कवयितॄणां साहित्यशास्त्र-प्रावीण्यं प्रख्यापयति। प्रशस्त्यलंकार-परिच्छेदोऽत्र विधीयते।

शब्दाऽलङ्काराणाम् अनुप्रास-यमकाव् एव विशेषेण दृश्येते। श्लेषो रसभङ्गं जनयतीति प्रशस्ति-कृद्भिः सोऽत्याजि। इतरैस् तस्य संकरः कुत्रचिन् नूनं विलोक्यते। अर्थालङ्कारेषु चोपमा-रूपक-विरोधाभासाऽर्थान्तरन्यासादयः प्रयुज्यमाना दृश्यन्ते। तद्यथा—

अनुप्रासः—

१. यशश्च यश्चन्द्रमरीचिगौरं दधार धाराधरधीरघोषः।[1] इत्यत्र वृत्त्यनुप्रासः।

२. तस्यानुकूलः कुलजात् कलत्रात् सुतः प्रसूतो यशसां प्रसूतिः।[2]

अत्राऽपि वृत्त्यनुप्रास एव।

३. गृहिणां स्वगुणैस्त्रिवर्गतुङ्गा
विहितान्यक्षितिपतिमानभङ्गाः।
अभवन्नुपजातभीतिलिङ्गा
यदनीकेन सकोसलाः कलिङ्गाः॥[3]

४. हरेरिवांशं वशिनं वराहं वराहदासं यम् उदाहरन्ति।[2] इत्यत्र छेकानुप्रासः।

यमकः—

१. यथावत्प्राप्तधर्मार्थकामविषयाणां विषयाणां पतिना।[4]

२. नमोऽस्तु सुगताय गताय शान्तिम्।[5]

---

१. गोविन्दगुप्तस्य मन्दसोर-प्रशस्तौ।

२. यशोधर्मणो मन्दसोर-प्रशस्तौ।

३. एहोल-प्रशस्तौ।

४. रुद्रदाम्नः प्रशस्तौ।

५. गोविन्दगुप्त-प्रशस्तौ।

३. वनाध्वनि ध्वनि-नदद्विन्ध्याद्रि-रन्ध्रैर् बलैः ।[१]

४. येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः ॥[२]

**उपमा—**

१. (यस्य) प्रदान-भुजविक्रम-प्रशम-शास्त्रवाक्योदयै-
रुपर्य्युपरि-सञ्चयोच्छ्रितमनेकमार्गं यशः ।
पुनाति भुवनत्रयं पशुपतेर्जटान्तर्गुहा-
निरोध-परिमोक्ष-शीघ्रमिव पाण्डु गाङ्गं पयः ॥[३] इत्यत्र **पूर्णोपमा** ।

**अन्यत्राऽपि बहुषु स्थानेष्व् एवं पूर्णोपमाया उदाहरणानि द्रष्टुं शक्यन्ते—**

२. प्रविशती कलिमारुतघट्टिता क्षितिरलक्ष्यरसातलवारिधौ ।
गुणशतैरवबध्य समन्ततः स्फुटितनौरिव येन बलाद् धृता ॥[४] **अत्र पूर्णोपमा** ।

३. भूमिपतिर्यमेनं स्वेषां बलानां बलदेववीर्यं गुणानुरागादधिपं चकार ।
इत्यत्र **लुप्तोपमा** ।

४. यस्मिन्सुहृत्संगमशीतलश्च मनो मुनीनामिव निर्मलं च ।
वचो गुरूणामिव चाम्बुपथ्यं पेपीयमानः सुखमेति लोकः ॥[५] **मालोपमा** ।

५. तस्मात्सूर्य इवोदयाद्रिशिरसो धातुर्मरुत्वानिव
क्षीरोदादिव तर्जितेन्दुकिरणः कान्तप्रभः कौस्तुभः ।
भूतानामुदपद्यत स्थितिकरः स्थेष्ठं महिम्नः पदं
राजन्राजकमण्डलाम्बरशशिश्रीशानवर्म्मा नृपः ॥[४]
**मालोपमा** ।

६. आसीद् दन्तिसहस्रगाढकटको विद्याधराध्यासितः ।
सद्वंशः स्थिर उन्नतो गिरिरिव श्रीकृष्णगुप्तो नृपः ॥[६] **श्लिष्ट-पूर्णोपमा** ।

**रूपकम्—**

१. यो दृप्तवैरिनारीमुखनलिनवनैकाशिशिरकरः ।[६] **अत्र परम्परितरूपकम्** ।

२. स्फुरन्मयूखैरसिदीपिकाशतैर्
व्युदस्य मातङ्गतमिस्रसंचयम् ।
अवाप्तवान् यो रणरङ्गमन्दिरे
कटच्छुरिश्रीललनापरिग्रहम् ॥[१] **सांग-समस्तवस्तुविषयः** ।

---

१. यशोधर्मणो मन्दसोर-प्रस्तौ । २. एहोलप्रशस्तौ । ३. समुद्रगुप्त-प्रशस्तौ । हड्डालेखे । ५. गोविन्दगुप्त-प्रशस्तौ । ६. अफसद्-लेखे ।

३. गुप्तादि-पार्थिव-कुलाम्बुरुहस्थलानि
स्नेहादर-प्रणय-सम्भ्रम-केसराणि ।
श्रीमन्त्यनेक-नृप-षट्पद-सेवितानि
योऽबोधयद् दुहितृदीधितिभिर्नृपार्कः ॥[१]

**अत्रापि सांग-समस्तवस्तुविषयः ।**

४. मत्तेभ-गण्ड-तट-विच्युत-दान-बिन्दु-
सिक्तोपलाचल-सहस्र-विभूषणायाः ।
पुष्पावनम्र-तरु-शण्ड-वतंसकाया
भूमेः परं तिलकभूतमिदं क्रमेण ॥[२] **सांगम् एकदेशविवर्ति ।**

५. यस्याद्याप्यधिवास्यते जलनिधिर्वीर्य्यानिलैर्दक्षिणः ।[३]

**निरंगं केवलम् ।**

**उत्प्रेक्षा—**

१. इतस्त्रिदशपति-भवन-गमनावाप्त-ललित-सुख-विचरणामाचक्षाण इव भुवो बाहुरयमुच्छ्रितः स्तम्भः ।[४]

२. अनेकतीरान्तज-पुष्प-शोभितो नदीमयो हस्त इव प्रसारितः ।[५]

**अर्थान्तरन्यासः —**

१. लक्ष्मी-कीर्त्ति-सरस्वती-प्रभृतयो यं स्पर्धयेवाश्रिताः ।
लोके कामितकामिभावरसिकः कान्ताजनो भूयसा ॥[६]

२. हृद्यामुदारां त्वरितमकुरुतामप्रपञ्चां प्रशस्तिं,
वाच्छेतां किन्न पंगू शिखरितरुफलावाप्तिमुच्चैः करेण ॥[७]

३. योऽजायतास्मात् खलु पर्णदत्तात् स न्यायवानत्र किमिति चित्रम् ।
मुक्ता-कलापाम्बुज-पद्म-शीताच्चन्द्रात् किमुष्णं भविता कदाचित् ॥[५]

**विरोधाभासः —**

१. श्रीवल्लभोऽप्ययासीद् वातापिपुरीवधूवरताम् ।[८]

२. परदारानिवृत्तचित्तवृत्तेरपि धीर्यस्य रिपुश्रियानुकृष्टा ॥[८]

**सहोक्तिः —**

१. स्वतनयगतराज्यारम्भयत्नेन सार्धं
निजमतनु च राज्यं जीवितं चोज्झति स्म ॥[८]

---

१. शान्तिवर्म्मणस् तालगुण्डलेखे । २. पट्टवायश्रेणी-प्रशस्तौ । ३. महरौली-स्तम्भ-लेखे । ४. समुद्रगुप्त-प्रशस्तौ । ५ स्कन्दगुप्तस्य जूनागढ़-लेखे ' ६. हड्डालेखे । ७. यशोवर्म्मणो नालन्दा-लेखे । ८. एहोल-प्रशस्तौ ।

संकरः —

यशोवर्मणो नालन्दा-प्रशस्तेर् इह पद्ये श्लेषरूपकोपमाः सांकर्यम् उपेताः ।

सर्वेषां मूर्ध्नि दत्त्वा पदमवनिभृतामद्भुतो भूरिधामा

निस्त्रिंशांशुप्रतानप्रदलितनिखिलारातिघोरान्धकारः ।

ख्यातो यो लोकपालः सकल-वसुमती-पद्मिनी-बोधहेतुः

श्रीमान् भास्वानिवोच्चैस्तपति दिशि दिशि श्रीयशोवर्म्मदेवः ॥

प्रशस्तयः प्रायेण छन्दसा निबद्धा यासां काव्य-सौन्दर्यम् अत्र दिङ्मात्रं प्रादर्शि । गद्योपरचिता महा-क्षत्रपस्य योद्धृ-शासयितृ-प्रवेकस्य सुगृहीत-नाम्नो रुद्रदाम्नो गिरनार-प्रशस्तिर् अलङ्कृत-गद्यस्याद्या कृतिर् अस्ति । विंशतिपङ्क्ति-युतेऽस्मिन् बृहल्-लेखे प्रसाद-समता-माधुर्यार्थव्यक्त्युदारत्वौजः-चित्रत्वादीनि गद्यजीवित-भूतानि तानि सर्वाणि तत्त्वानि समाहितानि, यानि दण्डि-सुबन्धु-बाणादीनां गद्यचूडामणि-भूतानां लब्ध-ख्यातिषु कृतिषु समासाद्यन्ते । इयं प्रशस्तिर् गद्य-काव्यस्य समतां विगाहते, अस्याः प्रणेता च बाण-शिष्य-भूतो विराजते । महाक्षत्रपस्य चरित-शौर्य-विजय-वृत्तं प्रख्यापयन्त्य् अपीयं कृतिर् बंहिष्ठं गद्य-गौरवम् आवहति । अनुप्रासोत्प्रेक्षा-यमकादयोऽलङ्काराः, समास-बाहुल्यं, शब्दाडम्बरश् चाऽत्र प्रतिपदं विद्यन्ते । बाणादेर् इवाऽस्य कवेर् अपि वर्तते कोऽपि वर्णन-व्यासङ्गः । मौर्यचन्द्रगुप्ताशोकाभ्यां कृतः संस्कारितो गिरिनगरे सुदर्शन-नामधेयस् तडागो रुद्रदाम्नो राज्यकाले घोरेण वायुना व्यभिद्यत । तम् एवाऽङ्गीकृत्य कविना कृतं सुदर्शन-सेतु-भङ्ग-वर्णनम् अपि सहृदय-हृदयान्य् आवर्जयति । तद्यथा—

"महाक्षत्रपस्य गुरुभिर् अभ्यस्त-नाम्नो रुद्रदाम्नो वर्षे द्विसप्ततितमे मार्गशीर्ष-बहुल-प्रतिपदि···सृष्ट-वृष्टिना पर्जन्येन एकार्णव-भूतायाम् इव पृथिव्यां कृतायां गिरेर् ऊर्जयतः सुवर्णसिकता-पलाशिनी-प्रभृतीनां नदीनाम् अतिमात्रोद्वृत्तैर् वेगैः सेतुम······(यम) णानुरूप-प्रतीकारम् अपि गिरिशिखरतरु-तटाट्टालकोपेत-तल्पद्वार-शरणोच्छ्रय-विध्वंसिना युगनिधन-सदृश-परमघोर-वेगेन वायुना प्रमथित-सलिल-विक्षिप्त-जर्ज्जरीकृतावदीर्ण···क्षिप्ताश्म-वृक्ष-गुल्मलता-प्रतानम् आनदीतलादित्युद्घाटितमासीत् । चत्वारि हस्तशतानि विंशदुत्तराण्यायतेन एतावत्येव विस्तीर्णेन पंचसप्ततिहस्तानवगाढेन भेदेन निस्सृत-सर्व-तोयं मरु-धन्वकल्पम् अति दुर्द (र्शनम्)" ।

विमर्शेनाऽनेनाऽवदातं यद् येऽभिलेखा इतिहासगत-नीरसवृत्त-तथ्यानां संकलनान्य् एव मन्यन्ते ते काव्य-मधुरिमोपेता अलङ्कार-चमत्कृता रसभावमण्डिता विच्छित्ति-संवलिता वर्णनोपबृंहिताः काव्यांशा एव सन्ति । तेषु केचन तु काव्य-हेवाकिनां साहित्य-शास्त्र-मर्म-विदां मनीषिणां श्लाघाभाजनताम् अपि याता इति ।

# विनोद्-कणिकाः

रामस्वरूपशास्त्री*

बिले प्रविष्टो न बिलेशयोऽस्मि,
ध्वनेर्निदानं न च वाद्यमस्मि ।
देहेषु गेहेषु दिनेषु रात्रौ,
व्याप्तोऽस्मि सर्वत्र जगत्सु कोऽहम् ॥१॥

पादौ मदीयौ सुदृढौ सुगोलौ,
स्कन्धौ विशालौ वहनं वृषाभ्याम् ।
लम्बोदरोऽहं न करौ मम स्तः,
वोढाऽस्मि भारस्य वदन्तु कोऽहम् ॥२॥

अहं शिखावानपि नो मयूरः,
ग्रसामि शरणं नतु वामलूरः ।
खादामि सर्वं नतु होटली च,
लोके विशुद्धीकरणः स कोऽहम् ॥३॥

प्रकम्पनोऽहं पवनो न भीतीः,
रुद्रस्य पुत्रोऽस्मि गुहो न दन्ती ।
जगत्समग्रं परितापयामि,
वदन्तु कोऽहं तनुजा जनानाम् ॥४॥

---

*सम्पादकः, बालसंस्कृतम्, बम्बई ७७

---

१. आकाशः । २. शकटः । ३. पावकः । ४. ज्वरः ।

# साहित्य-समीक्षा

**कल्याण-मैत्री**— (कथाबन्धः) रचयिता प्रकाशकश्च—महीधरवेङ्कटरामशास्त्री, प्राप्तिस्थानम् म. वेङ्कटरामशास्त्री, ए. वाइ. संस्कृत-कालेज, राजमहेन्द्री, (आन्ध्र प्रदेश)। आकारः $\frac{१८ \times २२}{८}$ ; पृष्ठसंख्या १४१ ; मूल्यम् ३.०० ।

राजमहेन्द्रीपुरस्थेन विदुषा श्रीमहीधरवेङ्कटरामशास्त्रिणा सन्दब्धम् अष्टादशसु परिसरेषु विभक्तं कल्याण-मैत्री-संज्ञं कथाप्रबन्धम् आमूलचूलम् अवालोकिषि। विषय-महिम्नाऽद्यतनीम् उपन्यासाऽभिधां साहित्यविधाम् आद्रियमाणोऽयं प्रबन्धो वीरमणि-संज्ञकम् अपि गुणवयोवृद्धम् अप्रसिद्धं जनं नायकीकृत्य वेणुनाद-शूरवर-चारुदतीप्रभृति-पात्रचरितान्य् अधिकृत्य प्रवर्तते । कोऽपि सेवावृत्तिर्दिवङ्गत-जाया-स्मृति-सुदीनो गुणैर् अहीनो वीरमणिनामा दौर्भाग्यम् आत्मनः शोचन् सहसा विश्रामार्थिना पान्थेन तरुणद्वन्द्वेन सङ्गत आत्मोदन्तश्रावणेनोपजनित-सौहार्दस् तयोः साप्तपदीनं गतः परिवृढत्वं गच्छति। व्यवसायाऽनुक्रमेण ग्रामाद् ग्रामं गतोऽन्वर्थं धर्मवीरस्य सुतत्राणाऽऽवर्जितहृदयस्य गृहम् अधिवसन् स रक्षापुरुषैः स्तेयस्य मिथ्याऽभियोगे निगडितो वर्षावसायिनं कारावासं भुङ्क्ते । ततो मुक्तश्च जनितवैराग्यस्तीर्थयात्रा-प्रसङ्गेन पर्यटन्न् अनुषङ्गवशात् पूर्वस्वामिनीं नदीस्रोतसि निमज्जन्तीं गोपायति । पुनश्च त्रातपूर्वस्याऽधुना शिक्षाधिकारिपदं भजतः शूरवरस्य पार्श्वे वसन् पुनरपि वेणुनाद-चारुदतीभ्यां संगतस् ताभ्यां पर्युपास्यमानः साधनया कलेवरम् इदम् अपहाय ब्रह्मभूयं प्रयातीत्य् एतावद् अपि कथावस्तु विस्तरशो वर्णितम् अष्टादशपरिसरेषु विभक्तम् ।

सहृदयोऽयं कविर् भाव-सम्पदा वर्णन-गुणेन च नितरां सुरसां प्राञ्जलां च रचनापद्धतिम् आकलयन् प्रगुणम् आनन्दम् उपजनयति। अत्र प्रयुक्ता पदावली लालित्याऽतिशयम् आदधाना पाठक-मनांसि प्रसह्याऽप्य् आवर्जयति । 'नव-विकसित-कुसुम-शत-गत-परिमलयुत-मधुर-मधुरस-पान-चपल-मधुकरततयः' इत्येवंविधा ललित-तर-पदयोजनाऽत्राऽनेकशो लक्ष्यन्ते । वस्तु-वर्णने रचयिता विशेषेण

साऽभिनिवेश इव लक्ष्यते यदसौ विस्तरशो सरितः पल्लया अरण्यान्या गज-केसरिनियुद्धस्य च वर्णन-प्रसङ्गेन कथानकम् अपि विस्मरति। वर्णनाऽतिशयश् च कथा-प्रसङ्गे गडुताम् इवोपगतः। द्वितीय-महासमरस्य पाकस्थानेन सह विगत-संघर्षस्य च चर्चा, अनेकेषु पृष्ठेषूपदेशाऽतिशयः प्रबन्धस्याऽस्य वैगुण्यम् उपजनयति। 'समुन्नमितुं', 'निःस्वसती' इत्यादयोऽपशब्दाः क्वचिल् लक्ष्यन्ते। क्वचिन् मुद्रणस्खलितानि च लक्ष्यन्ते। परं सत्स्व् अपि कतिपयेषु स्खलितेषु कृतिर् इयं गुण-सम्पदाऽभिवन्दनीयैव भवति कृतधियाम्।

आशासे, सुरभारती-रसिकेषु विद्वत्सु विद्यालयेषु पुस्तकालयेषु च भूयसा च प्रचारेणाऽस्य सादरेण कवयितुर् गुरुतर-साहित्य-सृष्टये भूयोऽपि सम्पत्स्यत उत्साहवृद्धिर् इति—

—शिवप्रसादो भारद्वाजः

**सांख्यकारिका सांख्य-रमणीया** (टीका)—लेखकः— कुरगण्टि वेंकटरमण-शास्त्री। प्राप्ति-स्थानम्— प्रो० ई. वी. वी. राघवाचार्यः, एम. ए., ए. ई. एस, ६३६ विद्यानगर, हैदराबाद—७.

टीकाम् इमां पठित्वाऽनायासेनैव विदुषः टीकाकारस्य तर्क-सांख्यादि-गत-वैदुष्यं स्फुटीभवति। यद्यपि सांख्य-कारिकाया वाचस्पति-मिश्र-गौडपादाऽऽचार्यादिभिः कृता व्याख्या नाऽविदितचरा विदुषां परं ताः कुत्रचिद् गाम्भीर्येण कुत्रचिच् च भावाऽभिव्यक्ति-राहित्येन न तथा छात्रोपयोगिन्यो यथेयम्। सारल्यम् आनेतुम् एव लेखकेन टीकेयं कृता प्रतीयते। अन्यथा सत्सु बहुषु टीका-ग्रन्थेषु किन् नामाऽऽवश्यकम् अस्याः टीकायाः। टीकायाम् अस्यां टीकाकारो यद्यपि कुत्रचिन् महता प्रयत्नेन नूतनताम् आनेतुं प्रायतत परं प्रायो गौडपादं वा तत्त्व-कौमुदीं वाऽनुसरन् एव दृश्यते। एतत् तु निर्विवादं यद् ग्रन्थम् इमम् अधिकृत्य विलिखितास्व् अपि बहुषु टीकास्व् अद्याऽपि बहूनां स्थलानां व्याख्याने विदुषां विप्रतिपत्तयो यथापूर्वम् एव सन्ति। टीकाकारेणाऽनेनाऽपि न तत्र ध्यानं दत्तम्। यत् किंचिद् यत्र कुत्रचित् कथितम् अपि, तद् अपि न क्षोद-क्षमम्। यथा— दशम-कारिकाया व्याख्याने लिङ्गं व्यक्तम्, अव्यक्तम् अलिङ्गम् इत्यत्र लिङ्ग-विशेषणस्य व्याख्याने 'प्रधानं तु न कस्याऽपि लिङ्गं भवतीति अलिङ्गम्' इत्युक्तम्। प्रधानं लिङ्गं न भवति चेत् कथं सप्तदश्याः कारिकायाः सङ्गतिः, कथं च तत्र स्वयम् एवाऽनुमानपरकम् अर्थम् अङ्गीकुर्वता टीकाकारेण कारिका व्याख्याता?

पञ्चविंशति-तत्त्वानां प्रामाण्यम् अधिगन्तुं प्रमाणत्रये स्वीकृते 'सामान्यतस्त्वदृष्टात्° का० ६' इत्यत्र भाष्ये 'परोक्षं स्वर्गादिकं आप्तागमात् सिद्धम्' इति विलिखता विदुषा गौडपादाचार्यादिभिः प्रचालिता परम्परैव रक्षिता। किं वस्तु-तत्त्वम् इति प्रतिपादयितुं न प्रायतत। यत्र सोपज्ञं किञ्चिद् विलिखितुम् अचेष्टत तत्र कथने विरोध इव परिलक्ष्यते। यथा— 'चित्रं यथा० का० ४१' इत्यत्र 'न विना भावैर्० का० ५२' इत्यत्र च कारिका-व्याख्याने स्ववचोव्याघात इव प्रतीयते न तु नूतनं किञ्चित्।

भवतु सर्वं तथाऽपि कारिकाऽर्थ-सम्पादने साहाय्यं समाचरन्ती टीकेयं संस्कृत-साहित्यस्य सांख्य-सिद्धान्त-जिज्ञासोश् च महद् उपकरोति। तेन धन्यवादाऽर्हः टीकाकारः, संस्कृत-साहित्य-सेविनो विद्वांसो विद्यालयाध्यक्षाः पुस्तकालयाध्यक्षाश् च ऽस्या आदरं विधाय लेखकोत्साहं वर्धयिष्यन्तीत्य् आवेद्यते।

आशासेऽग्रिमावृत्तौ पत्रादि-विषये बद्ध-मुष्टिं गतः प्रकाशकः पत्रादेः सुचारु-व्यवस्थां विधाय प्रूफादि-पठनस्याऽप्य् उचितं प्रबन्धं कृत्वा सम्प्रति समागतान् ताँस् तान् दोषान् अपाकरिष्यतीति निवेदयति।

—उनियालः

# सम्पादकीयम्

## एभिर् वियुक्ता वयम् !!

डा० गोपीचन्दभार्गवः—

गते दिसम्बर-मासि पञ्चविंशे दिने श्रीमान् डा० गोपीचन्दभार्गवोऽस्मान् सहसा विहाय दिवं प्रयात इति कष्टा वार्ता। हृदय-रुजा पीडितस्य सतस् तस्याऽभूवन् कतिपयानि वर्षाणि, परं तस्मिन् दिने स प्रकृतिस्थ इवाऽऽसीत्। यथाऽभ्यासं प्रातराशं विधाय पंजाब-खादीग्रामोद्योग-संघ-कार्ये संलग्नस्य लेखनी-हस्तस्यैव तस्य प्राण-पतत्रिण उत्पतिताः। सत्य-निष्ठस्याऽस्य मानवस्य प्रयाणम् उपश्रुत्य सर्वे लुण्ठिता इव मुषिता इव च सञ्जाताः।

१९०७ तमेऽब्दे लवपुरे मैडिकल-कालेज-प्रवेशात् प्राक् स आर्य-संस्थासु शिक्षितो दीक्षितश् चाऽभवत्। तस्मिन् नव एव वयसि स लालालाजपतराय-महात्महंसराज-सदृशानां तपो-धनानां त्याग-वीराणां प्रभावैर् भाविताऽऽत्माऽभवत्। १९२१ तमेऽब्दे गान्धि-युगे प्रवृत्ते, स स्थिर-चेताः स्वयं-सेवकः सन् राजनीतिम् अवातरत्, स्व-कार्य-नैपुणी-बलेन च शनैः शनैर् लाजपतराय-गान्धि-पटेल-प्रभृतीनां विश्वास-भाजनम् अभवत्। १९४७ तमेऽब्दे यदा स पञ्जाप-प्रान्तस्य मुख्य-मन्त्रिताम् अकरोत् तदा विभाजन-जन्यासु विषमासु भयानकासु चाऽवस्थासु तेन प्रदेशस्याऽस्य या सेवा व्यधायि सा सदा स्मरिष्यते। सत्यम्, सोऽनेकानि वर्षाणि मुख्य-मन्त्रित्वेन वित्त-मन्त्रित्वेन च कार्यम् अकरोत्, परं सर्वजन-हितकरीषु लोक-संस्थासु स सदैव जाग्रद्-रुचिर् अवर्तत। अस्माकं संस्थानं प्रत्य् अपि तदीयः स्नेह-भावः सदाऽवृतत्। संस्थानम् इदं सोऽन्तिमेषु क्षणेष्व् अपि न व्यस्मरत्। तदीयाः सात्त्विका भावास् तस्य सुपुत्रेण डा० फतहचन्दभार्गवेण ६-१-६७ दिने प्रहिताद् अधस्तनात् पत्रात् साधु प्रकाश्यन्ते—

"My father, late Dr. Gopi Chand Bhargava, had mentioned that he promised to give Rs. 1,000/- to the Vaidik

Research Institute. I will send you this amount in due course. For the time being, I am writing it for your information."

'मम तात-पादा डा० गोपीचन्द-भार्गवा माम् उक्तवन्तो यथा मया विश्वेश्वरानन्द-वैदिक-शोध-संस्थानाय सहस्रं मुद्राः प्रदातुं प्रतिश्रुतम् आसीद् इति । कालेनाऽहं तं राशिं भवतः सकाशं प्रहेष्यामि । सूचनार्थम् इदानीम् एतल् लिख्यते ।'

## इमाव् अपि विद्वत्तरौ देवभूयं गतौ !!

पुण्यपत्तने नवति-वर्षीयो डा० श्रीपादकृष्णो बेलवल्करः मुम्बा-नगर्यां चतुःसप्तति-वर्षीयः प्रा० हरिदामोदरो वेलङ्करश् च भुवम् इमां विरहय्य दिवं गतौ । उभाव् अपि संस्कृतस्य मूर्द्धन्यौ विद्वांसौ देशे विदेशे च विश्रुत-कीर्त्ती अभूताम् । यैः खलु महानुभावैः १९१७ तमेऽब्दे पुण्य-पत्तने भण्डारकर-प्राच्य-शोध-संस्थानं प्रतिष्ठापितं, डा० बेलवल्कर-महोदयोऽपि तेष्व् अन्यतम आसीत् । तेन संस्थानेन परिचालिताया महाभारत-सम्पादन-योजनायाः स प्रमुखः सूत्र-धार आसीत् । मध्ये स कञ्चन कालं यावद् वाराणसेय-हिन्दुविश्वविद्यालये मुख्यप्राध्यापकत्वेन कार्यं कृत्वा चरमे वयसि पुनर् महाभारत-सम्पादकत्वम् अकरोत् । प्रा० वेलङ्कर-महाभागः प्रथमं मुख्य-रूपेण सुचिरं मुम्बा-पुर्यां विलसन-महाविद्यालये संस्कृत-विभागाध्यक्षोऽभवत् । ततः पश्चात् कतिचन वर्षाणि भारतीय-विद्या-भवनेऽनुसन्धान-विभागस्याऽध्यक्षताम् अकरोत् । कुतश्चित् कालात् स इदानीं बम्बई-विश्वविद्यालये संस्कृत-विभागाध्यक्ष आसीत् । वेद-विद्यायाम् असौ विशेषेण कृत-श्रमोऽभूत् । स समग्राया ऋक्-संहितायाः सटिप्पणम् आङ्गल-भाषाऽनुवादं समापयत् । तस्याऽल्पीयान् एवांऽशोऽधुना मुद्रितः । छन्दःशास्त्रेऽपि स नैपुणीम् अवाप्नोत् । संस्कृतस्य प्राकृतस्य च कतिपये छन्दो-ग्रन्था अपि तेन प्राकाश्यं नीताः ।

उभयोर् अपि विदुषोः प्रेमास्पदम् इदं संस्थानं तयोर् महाप्रयाणस्य दारुणेऽस्मिन् क्षणेऽरुन्तुदं खेदम् अनुभवति ।

## मित्रस्य चक्षुषा समीक्षामहे—

जनवरीमासस्य दशमे दिने स्वर्गतस्य श्रीमतो लालबहादुर-शास्त्रिणः प्रथमा वार्षिक्य् अभवत् । 'वयम् अस्माकं प्रतिवेशिनो देशाश्च मित्र-भावेन वर्त्तेमहि' इत्य् आसीत् तदीया हार्दिकी कामना । परं दुर्बलं न कश्चिन् मित्रं कर्त्तुं वाञ्छतीत्य् अपि स सम्यग् अजानात् ।

प्रतिवेशिनं दुर्बलं मन्यमानं राष्ट्रं तस्य हानाय प्रयतते । पाकिस्तानम् अपि नाऽस्याऽपवाद आसीद् । अत एव स भारतेन प्रसारितं प्रत्येकं मैत्री-भाव-हस्तं तस्य दौर्बल्यम् अमन्यत । एतद्-भ्रान्ति-वशं गतं तत् १९६५ वर्षस्य सितम्बर-मासे यदा देशम् इमम् आक्रामत् तदा तदीयं दुर्भावं सूक्ष्मया दृशा प्रेक्षमाणः शास्त्रि-महाभागः तस्यैवोपरि प्रत्याक्रान्तवान् । एतेन पाकिस्तानं भिन्न-भ्रमं सद् आश्चर्य-स्तब्धं सञ्जातम् । पाकिस्तान-पराजयेन स्थितिः पर्यवृतत् । अस्यैवाऽयं परिणामो यत् ताशकन्द-नगरे उभाभ्यां देशाभ्यां मैत्री-भावेन वर्तनस्य घोषणाऽकारि । अस्या घोषणायाश् चारितार्थ्ये एवाऽऽवयोर् उभयोर् अपि भद्रं प्रतितिष्ठति । प्रथमं तावद् अस्माभिर् अन्तरतस् तथा सुदृढैः सबलैश् च भाव्यं यथा कोऽपि बाह्यो देशम् इमं प्रवेष्टुमना अपि न स्यात् । परम् अस्माकम् एतेन तेजसा परेषाम् उद्वेजनाय धर्षणाय च न भवितव्यम् । किं तर्हि ? तेषां मैत्री-सम्भावनायैवेति ।

—विश्वबन्धुः

# समाचाराः

**विश्व-सत्सङ्गः—**

संस्थाने प्रति-रविवासरं मध्याह्नोत्तर-काले सत्सङ्गस्य कार्य-क्रमो भवति, तत्र प्रायः संचालक-महोदयैर् यदा कदा च स्थानीयैर् बहिर्-आगतैश् च विद्वद्भिर् महात्मभिश् च शास्त्रीय-विषयाणां वा सामयिक-विषयाणां वा सोपपत्तिकं निराक्षेपं विशदं विवेचनं विधीयते। नवम्बर-दिसम्बर-जनवरी-फरवरी-मासीयेषु रविवासरेष्व् अपि श्रीसंचालक-महोदयानां भाषणान्य् अभवन्। श्रीदेवदत्तशास्त्रिणश् च महाभारतस्य सदाचार-सम्बन्धीनि वचनान्य् अश्रावयन्। समये समये च महापुरुषाणां जन्मोत्सवादिकम् अभिलक्ष्य विशेषाऽधिवेशनान्य् अप्य् अभवंस् तानि चेत्थम्—

**गुरु-नानक-जयन्ती—**

नवम्बर-मासस्य २ दिनाङ्के प्रि०रलाराम-महोदयस्याऽध्यक्षतायां गुरु-नानक-जयन्त्या माननम् अभूत्। तत्र प्रो०जगन्नाथाग्रवाल-महोदयेन गुरुनानकस्य जीवन-गत-वैशिष्ट्यं वर्णयता 'जीवनं तस्याऽस्मभ्यं प्रेरणा-प्रदम् अस्तीत्य्' उक्तम्। आचार्य-विश्वबन्धु-महाभागः सतां महत्त्वं वर्णयन्न् आवश्यकतां च तच्-चरितानां प्रदर्शयन् तस्मै श्रद्धाञ्जलिं समार्पयत्। तदानीं ग्यूबिंगन-विश्वविद्यालयस्य संस्कृत-विभागस्य प्राध्यापकः डा० पीटर् हान्स् स्मिथ् अपि संस्थाने उपस्थित आसीत्, महानुभावोऽसाव् अपि स्वविचारान् अस्मिन्न् अवसरे प्राकटयत्। श्रीदेवदत्त-शास्त्री गुरुवाणीं, श्रीइन्द्रदत्त उनियालः श्रीसुरेशचन्द्रश् च तद्-विषयक-कविताम् अप्य् अश्रावयताम्। अन्ते चाऽध्यक्षो गुरुनानकस्य गुणान् वर्णयन् स्व-श्रद्धाञ्जलिं-समार्पयत्।

**गुरुगोविन्दसिंह-जयन्ती—**

जनवरी-मासस्य २२ दिनाङ्के आचार्य-विश्वबन्धोर् अध्यक्षतायां गुरु-गोविन्दसिंह-जयन्त्या विशिष्टम् अधिवेशनम् अभूत्। डा० ओमप्रकाशः, श्रीदयानन्द आर्यः, प्राध्यापक-श्यामदेवपाराशरः, प्रिंसिपलरामदासश् चैते सर्वेऽपि महानुभावाः स्व-स्व विचारानुरूपं गुरोर् जीवन-कार्यं व्यक्तित्वं, साहित्यिक-महत्त्वं चाऽवर्णयन्। श्रीहरिदत्तस् तस्य काव्येभ्य उद्धृतं कविताया

पाठम् अकरोत्, श्रीइन्द्रदत्त उनियालः, श्रीराजकुमारश् च तज्-जीवनम् अधिकृत्य विलिखितां स्वां स्वां कविताम् अश्रावयताम्।

अन्ते चाऽध्यक्षमहोदयो विस्तरेण तस्य जीवन-गत-वैशिष्ट्यं वर्णयन् तस्मै स्व-श्रद्धाञ्जलिं समार्पयत्।

**गणतन्त्रदिवसः—**

जनवरी-मासस्य २६, दिनाङ्के प्रातः ८. ३० वादन-काले संस्थानीयैः सर्वैर् एव कर्मिष्ठैः छात्रैश् चैकत्रीभूय गणतन्त्र-दिवसस्याऽऽयोजनं विहितम्। संस्थान-संचालक आचार्य-विश्वबन्धुर् ध्वजारोहणं विधाय सर्वान् एवोपस्थितान् कर्मिष्ठान् सम्बोधयन् पुण्य-दिवसस्याऽस्य महत्त्वं प्रदर्शयन्, का नाम स्वतन्त्रता, कथं च सा रक्षणीया, केषां केषां चाऽत्र योग-दानं केषां केषां च वलिदानं, स्वतन्त्रतायाः किं मानम्, किं चाऽस्माकं कर्तव्यं, किं चेतः पूर्वं कृतम् इति सर्वम् एव संक्षेपत उपादिशत्।

**वसन्त-पञ्चमी—**

संस्थाने वसन्त-पञ्चमी-पर्वोपलक्ष्य क्रीडाऽऽयोजनं प्रतिवर्षं यथा विधीयते अस्मिन् वर्षेऽपि तथैव ७ फरवरीतः संस्थाने क्रीडाऽऽयोजनस्य कार्य-क्रमो महतोत्साहेनाऽभूत्। तत्र कर-कन्दुकं, पाद-कन्दुकं, वृक्षारोहणं कवड्डी, धावनं, वैडमीन्टनप्रमुखा अन्याश् च क्रीडा अक्रीडयन्त। समाप्तिश् चैतस्य १४ तारिकायां जाता। समाप्तौ च तस्य श्री सन्तराम-महाभागेनाऽध्यक्षतां कुर्वता पुरस्कार-वितरणं कृतम्। डा० व्रजविहारी चौबे प्रा० वीरेन्द्र-शास्त्री च वसन्तम् अभिलक्ष्य भाषणे कृतवन्तौ, क्रीडाया महत्त्वं च प्रादर्शयताम्। संचालक-महोदयश् च सर्वेभ्यः क्रीडकेभ्यः आशीर्वचांसि ददत् क्रीडाया महत्त्वं प्रदर्शयन् क्रीडाक्षेत्रम् एकतायाः तादृशो विद्यालयो यत्र सर्वेऽपि वैर-भावं जातिगत-वैषम्यं व्यक्ति-गत-स्वार्थं चाऽपाकृत्य एकस्मिन् सूत्रे सम्बद्धाः कार्यं विदधति। अत एकत्रीभूय सर्वे कार्य-क्रमेऽस्मिन् न केवलं वर्षाऽन्ते एवाऽपि तु वर्षं यावत् कार्यं विदध्युर् इति।

मार्च-मासस्य १२ दिनाङ्के शिवरात्रि-पर्वणो विशिष्टम् अधिवेशनं भविष्यति।

## सरस्वती-समाजः—

प्रतिमासम् अन्तिम-शुक्रवासरे जायमानेषु सरस्वती-समाजस्योत्सवेषु नवम्बर-मासे 'रथ' इति विषयम् अधिकृत्य श्रीराधाकृष्ण-शास्त्रिणः, दिसम्बर-मासे 'वाद्-कले'ति विषये श्री कृ० वें० शर्मणः, जनवरी-मासे 'शक सम्वत्' इति विषयम् अवलम्ब्य प्रो० जगन्नाथाग्रवाल-महोदयस्य च भाषणान्य् अभूवन् । सर्वासां परिषदाम् अध्यक्षता श्रीसंचालक-महोदयैर् एवाऽलङ्कृता । प्रतिवारं प्रश्नोत्तराऽनन्तरम् अध्यक्ष-महोदयेन सर्वेऽपि विषया विस्तरेण न्यरूप्यन्त ।

## शिक्षण-विभागः—

शिक्षण-विभागतो दर्शनाचार्य-द्वितीयवर्षस्थश् छात्रः श्रीकृष्णबहादुर थापा, वेदाचार्य-प्रथमवर्षस्थः श्रीसुवीरशर्मा च रोहतकस्थ-गवर्नमेन्ट-कालेजे आयोजितायां संस्कृत-भाषण-प्रतियोगितायां सम्मिलिताव् अभूताम् । ततः चलविजयोपहारं च विजितवन्तौ । (इ. द. उ.)

---

# VISHVESHVARANAND INDOLOGICAL JOURNAL

*Editor :* **VISHVA BANDHU**

*Half-yearly Organ of the V. V. Research Institute*

COVERS THE ENTIRE FIELD OF INDOLOGY

**INCLUDING VEDIC & CLASSICAL SANSKRIT LANGUAGE & LITERATURE, RELIGION & PHILOSOPHY, HISTORY & ARCHAEOLOGY AND FINE ARTS**

*Annual Subscription* : **Rs. 20/–, Sh. 30, $ 5**

25% DISCOUNT TO MEMBERS OF THE V. V. R. I. SOCIETY WITH FREE SUPPLY OF THE HINDI MONTHLY OF THE INSTITUTE, **VISHVA JYOTI.**

*mebership Subscription* : **Rs.10 per annum or Rs. 250/- for life**

## V. V. RESEARCH INSTITUTE

**P. O. Sadhu Ashram, HOSHIARPUR (Pb.),**

---

**संस्थान का सांस्कृतिक हिन्दी मासिक**

## विश्व-ज्योति

सह-सम्पादक—विश्वबन्धु : सन्तराम

★ विविध सांस्कृतिक विषयों पर रोचक लेख।

★ कहानी, नाटक, कविताएँ।

★ विश्व-सत्संग और एकलिपि-विस्तार के विशेष स्तम्भ।

★ बालभारती में उत्तम सामग्री।

★ पुस्तक परिचय, सम्पादकीय टिप्पणियां, संस्थान-समाचार और विशेष समाचार आदि।

वार्षिक शुल्क रु० ८.००

(संस्थान सदस्यों को निःशुल्क। सदस्यता-शुल्क १० रु० वार्षिक या २५०० रु० एक बार)

## विश्वेश्वरानन्द वैदिक शोध संस्थान

(डा० घ०) साधु आश्रम, होशियारपुर (पं०)

# FORM IV

| | | |
|---|---|---|
| 1. Place of Publication | .. | Sadhu Ashram, Hoshiarpur |
| 2. Periodicity of its Publication | .. | Quarterly. |
| 3. Printer's Name | .. | Sh. DEV DATTA Shastri. |
| Nationality | .. | INDIAN. |
| Address | .. | P.O. Sadhu Ashram, Hoshiarpur. |
| 4. Publisher's Name | .. | Sh. DEV DATTA Shastri. |
| Nationality | .. | INDIAN. |
| Address | .. | Sadhu Ashram, Hoshiarpur. |
| 5. Editor's Name | .. | Dr. VISHVA BANDHU |
| Nationality | ... | INDIAN. |
| Address | | P. O. Sadhu Ashram, Hoshiarpur. |
| 6. Names and addresses of individuals who own the newspaper and partners or shareholders holding more than one percent of the total capital. | .. | V. V. R. Institute Society, Sadhu Ashram, Hoshiarpur. |

I, DEV DATTA SHASTRI, hereby declare that the particulars given above are true to the best of my knowledge and belief.

DEV DATTA SHASTRI
Publisher

Date : 4-3-1967.

# नियमाः

१. विश्वसंस्कृतं त्रैमासिकं पत्रम् । (तत् फर्वरी-मई-अगस्त-नवम्बर-मासानां) प्रत्येकं १५ दिनाङ्के प्रकाशितं भविष्यति ।

२. अस्मिन् प्रकाशनार्थम् एतदीयध्येयाऽनुकूलाः सत्यः मनोहारि-पद-योगा विचार-निर्भराः शिष्ट-जनोपयोगाऽर्हाः सर्वविधा रचनाः शोध-पूर्णा आलोचनात्मका वा यात्राद्युपवर्णनात्मका वा निबन्धाः, कविताः, रूपकाणि, कथाः, हास्य-कृतयः स्वीकृताः स्युः ।

३. प्रकाशनाय प्रेष्यमाणाः कृतयो नाऽतिदीर्घाः सत्यः सुवाच्याऽक्षरैः पत्रस्यैकतो लिखिता वा टङ्किता वा स्युः ।

४. रचनानां प्राप्ति-सूचना प्राप्ति-समकालम् एव प्रहीयते । तासां प्रकाशनं तु यथावसरं परीक्ष्य पश्चाद् एव संभवेत् । अतो लेखक-महोदयाः प्रस्तोष्यमाण एवाऽङ्के स्वकृतीनां प्रकाशनाय साऽऽग्रहा न भवेयुः ।

५. अप्रकाशितायाः सत्याः स्व-कृतेः परावर्तनम् इच्छन्तः सज्जना यथापेक्षं पत्रालयीय-मुद्रिकाः प्रेषयेयुः ।

६. लेखकाः स्वनाम-धाम-निर्देशादिकं सुवाच्याक्षरैर् लिखेयुः । सति संभवे पत्रालयादि-संकेत आंग्लभाषायाम् अपि लेख्यः ।

७. पत्रस्य वार्षिकं शुल्कं भारते ८ रूप्यकाणि, विदेशेषु १२ शिलिङ्गानि च वर्तते । तच् च पूर्णम् एव पूर्वतः प्रदेयं भवति । वी. पी. द्वारा प्रेषणस्य न नियमः ।

८. वि. वै. शो. संस्थानस्य सदस्यानां कृते वार्षिकं शुल्कं रु. ६) अस्ति । एषा सदस्यता द्वि-प्रकारा भवति, जीवन-सदस्यतेति च वार्षिकसदस्यतेति च । पूर्वस्याः सकृद्-देयं शुल्कं रु. २५०) । उत्तरस्याः प्रतिवर्षं देयं शुल्कं रु. १०) । सर्वेभ्योऽपि सदस्येभ्यः संस्थानस्याऽष्ट-रूप्यक-शुल्का विश्व-ज्योतिराख्या मासिकी हिन्दी-पत्रिका निःशुल्कं, षाण्मासिकी 'विश्वेश्वरानन्द-इण्डोलोजिकल-जर्नल' इत्याख्याऽऽङ्गली पत्रिका चाऽपरा २०) रूप्यकशुल्का सती १५) रूप्यकाणि प्राप्य प्रदीयते ।

९. समालोच्य-पुस्तकानां प्रत्येकं द्वितयी प्रेषणीया ।

१० विज्ञापन-शुल्कम्—पूर्णं पृष्ठम् (एकवारम्) ५०), (चतुर्वारम्) १७५) । पृष्ठस्य अर्धम् ३०), पृष्ठस्य तुरीयम् १६) ।

११ पत्र-व्यवहारे स्वकीया ग्राहक-संख्या सदस्य-संख्या वाऽवश्यम् उल्लेख्या ।

१२. ग्राहकाः पत्र व्यवहारार्थम् आत्मनः स्थायि-स्थान-निर्देशं यथा-संभवम् आंग्लभाषायाम् अपि लिखेयुः । अस्थायि-स्थान-संकेतस् तु स्व-पत्रालय एव सूचनीयः ।